# उपोद्घातः

समादीयतां शेमुषीधनैरुपदीक्रियमाणमिदं श्रीश्रीपालचरित्रं, कर्त्तारश्चास्य बृहद्गच्छाधिपानां श्रीमतां वज्रसेनसूरिपट्टपूर्वाचलप्रभाकराणां श्रीहेमतिलकसूरीणामन्तिषदः श्रीमन्तो रत्नशेखरसूरयः, प्रस्तुतग्रन्थकृद्भिर्विहितश्च गुणस्थानक्रमारोहः स्वोपज्ञवृत्तियुतः यो मुद्रित एतत्कोशगतद्रव्येण प्राक्, तथाविध एव च क्षेत्रसमासाख्योऽपरः परोऽयो मुद्रित आत्मानन्दाख्यया संसदा, तृतीयश्छन्दो रत्नावलीनामा छन्दोग्रन्थः अद्यापि अमुद्रितः, परमत्रावचूर्णिर्या मुद्रिता सा श्रीक्षमाकल्याणकैर्विहितेतिप्रघोषः, परं सामान्येन सूत्राणामर्थप्रकटने पट्वीतिमुद्रिता। विषयश्चास्य ग्रन्थरत्नस्याबालं प्रतिवर्षं चैत्राश्विनयोःश्रीमहोपाध्यायविनयविजयगणिभिरेतच्चरित्रावलम्बनेनैव विहितस्य रासकस्य श्रवणात् प्रसिद्ध एव, अत्र सिद्धानां नवानां पदानां श्रीमतामर्हदादीनां तत्त्वत्रये समावेश एवं विधेयः, आदिपदयोरर्हत्सिद्धयोर्देवतत्त्वे आचार्योपाध्यायसाधुलक्षणानां त्रयाणां पदानां गुरुतत्त्वे दर्शनज्ञानचारित्रतपसां चान्त्यानां चतुर्णां पदानां धर्मतत्त्वे, एवं समावेशः सुखोन्नेय इति नैतद्विषयस्य नूतनता, एतद्ग्रन्थानुसारेणैव हि कृपाविनयमुनिना श्रीपालचतुष्पदिका उदयरत्नेन लघू रासकः श्रीमज्ज्ञानविमलैर्बृहच्चरितं संस्कृतभाषया प्रकृतसंस्थयैव मुद्रितं विहितं, एतदेव प्रस्तुतचरित्रस्योपयुक्ततमत्वे प्रबलं साधनं । अत्र गाथानां त्रयोदशशती द्वाचत्वारिंशदधिका, रचनाकालश्च वैक्रमीयः पञ्चदशशताब्दीयः ' चउदस अट्ठावीसे ' इतिवाक्यवत्योपान्त्यगाथया निस्सन्दिग्ध एव । प्रयतन्तां च धीधनाः कृपामाधाय शोधनादौ सूचनायां च स्वज्ञनाया इत्यर्थयन्ते आनन्दसागराः १९७९ आश्विनकृष्णचतुर्थी ॥



# श्रेष्ठी देवचंद लालभाई जह्वेरी.

| जन्म १९०९ वैक्रमाब्दे | निर्याणम् १९६२ वैक्रमाब्दे |
|---|---|
| कार्तिकशुक्लैकादश्यां, सूर्यपूरे | पौषकृष्णतृतीयायाम्, मुम्बय्याम्. |

**The Late Sheth Devchand Lalbhai Javeri.**

**Born 1853 A. D Surat.** **Died 13th January 1906 A. D. Bombay,**

10000–1–21.

॥ इतिश्रीश्रीपालचरित्रस्य विषयानुक्रमः ॥



अर्हम्.

श्रेष्ठि देवचन्द लालभाई-जैनपुस्तकोद्धार-ग्रन्थाङ्के—

सिरिरयणसेहरसूरिहिं संकलिया (रत्नशेखरसूरिसंकलिता) तस्सीसहेमचंदेण साहुणा लिहिया—

# सिरिसिरिवालकहा ॥

ध्यात्वा नवपदीं भक्त्या, श्रीश्रीपालमहीभुजः । चरित्रं कीर्त्तयिष्यामि, रम्यं संस्कृतभाषया ॥ १ ॥

अरिहाइनवपयाइं, झाइत्ता हिअयकमलमज्झंमि । सिरिसिद्धचक्कमाहप्पमुत्तमं किंपि जंपेमि ॥ १ ॥

अत्थित्थ जंबुदीवे, दाहिणभरहद्धमज्झिमे खंडे । बहुधणधन्नसमिद्धो, मगहादेसो जयपसिद्धो॥ २ ॥

जत्थुप्पन्नं सिरिवीरनाहतित्थं जयंमि वित्थरियं । तं देसं सविसेसं, तित्थं भासंति गीयत्था ॥ ३ ॥

अर्हदादिनवपदानि हृदयकमलमध्ये ध्यात्वा उत्तमं श्रीसिद्धचक्रस्य-यन्त्रराजस्य माहात्म्यं किमपि जल्पामि-कथयामि ॥ १ ॥ अस्मिन् जम्बूद्वीपे दक्षिणभरतार्द्धस्य मध्यमे खण्डे बहुधनधान्यसमृद्धो जगत्प्रसिद्धो मगधाख्यो देशोऽस्ति ॥ २ ॥ यत्र मगधाख्ये देशे उत्पन्नं श्रीवीरनाथस्य तीर्थं जगति विस्तृतं-विस्तारं प्राप्तम्, तं देशं गीतार्थाः सविशेषं तीर्थं भाषन्ते-वदन्ति ॥ ३ ॥

तत्थ य मगहादेसे, रायगिहं नाम पुरवरं अत्थि । वेभारविउलगिरिवरसमलंकियपरिसरपएसं ॥ ४ ॥
तत्थ य सेणियराओ, रज्जं पालेइ तिजयविक्खाओ । वीरजिणचलणभत्तो, विहिअज्जियतित्थयरगुत्तो ॥ ५ ॥
जस्सत्थि पढमपत्ती, नंदा नामेण जीइ वरपुत्तो । अभयकुमारो बहुगुणसारो चउबुद्धिभंडारो ॥ ६ ॥
चेडयनरिंदधूया, बीया जस्सत्थि चिल्लणा देवी । जीए असोगचंदो पुत्तो हल्लो विहल्लो अ ॥ ७ ॥
अन्नाउ अणेगाओ धारणीपमुहाउ जस्स देवीओ । मेहाइणो अणेगे, पुत्ता पियमाइपयभत्ता ॥ ८ ॥

तस्मिन् मगधाख्ये देशे राजगृहं नाम पुरवरं अस्ति, कीदृशं तत्?—वैभारविपुलाख्यगिरिवराभ्यां समलङ्कृतौ परिसरप्रदेशौ—पार्श्वभागौ यस्य तत् एवंविधं पुरं वर्त्तते ॥४॥ तत्र च नगरे श्रेणिको नाम राजा राज्यं पालयति, कीदृशः राजा?—त्रिजगद्विख्यातः, पुनः? वीरजिनचरणभक्तः, तथा विधिनाऽर्जितं—उपार्जितं तीर्थंकरनामकर्म येन सः एवंविधः ॥५॥ यस्य—श्रेणिकराजस्य प्रथमपत्नी—प्रथमराज्ञी नन्दा नाम्नाऽस्ति, यस्या—नन्दायाः प्रधानपुत्रोऽभयकुमारनामाऽस्ति, कीदृशः?—बहुभिर्गुणैः सारः—श्रेष्ठः, पुनः? चतुर्बुद्धिभाण्डागारम् ॥ ६ ॥ यस्य श्रेणिकस्य द्वितीया देवी या देवी—राज्ञी चेटकनरेन्द्रस्य पुत्री चेलणा नाम्नी अस्ति, यस्याः चेल्लणायाः प्रथमपुत्रोऽशोकचन्द्रः—कूणिक इत्यर्थः, द्वितीयो हल्लः तृतीयो विहल्लश्च ॥ ७ ॥ अन्या अपि अनेका बह्व्यो धारणीप्रमुखा यस्य राज्ञो देव्यः सन्ति, तत्कुक्षिसम्भवा मेघकुमारादयोऽनेके पुत्राः सन्ति, कीदृशाः?—पितुर्मातुश्च पदयोः—चरणयोः भक्ताः ॥ ८ ॥

सो सेणियनरनाहो, अभयकुमारेण विहियउच्छाहो । तिहुयणपयडपयावो, पालेइ रज्जं च धम्मं च ॥ ९॥
एयंमि पुणो समए, सुरमहिओ वद्धमाणतित्थयरो । विहरंतो संपत्तो, रायगिहासन्ननयरंमि ॥ १० ॥
पेसेइ पढमसीसं, जिट्ठं गणहारिणं गुणगरिट्ठं । सिरिगोयमं मुणिंदं, रायगिहलोयलाभत्थं ॥ ११ ॥
सो लद्धजिणाएसो, संपत्तो रायगिहपुरोज्जाणे । कइवयमुणिपरियरिओ, गोयमसामी समोसरिओ ॥ १२ ॥
तस्सागमणं सोउं, सयलो नरनाहपमुहपुरलोओ । नियनियरिद्धिसमेओ, समागओ झत्ति उज्जाणे ॥ १३ ॥

स श्रेणिकनरनाथः अभयकुमारेण विहितः—कृत उत्साहो यस्य सः, पुनः ?—त्रिभुवने प्रकटः प्रतापो यस्य स एवंविधः सन् राज्यं च धर्मं च पालयति ॥ ९ ॥ एतस्मिन् समये—अवसरे पुनः सुरैः—देवैः महितः—पूजितः श्रीवर्द्धमानतीर्थङ्करः विहरन् राजगृहनगरस्य आसन्ने—समीपस्थे कस्मिंश्चिन्नगरे सम्प्राप्तः ॥ १० ॥ ततो भगवान् स्वकीयं प्रथमशिष्यं ज्येष्ठं—वृद्धं गणधारिणं गणधरं, पुनः ? गुणैर्गरिष्ठं ईदृशं श्रीगौतमं मुनीन्द्रं राजगृहनगरलोकस्य लाभार्थं प्रेषयति ॥११॥ स गौतमस्वामी लब्धः—प्राप्तः जिनादेशो—जिनाज्ञा येन सः एवंविधः सन् राजगृहपुरोद्याने सम्प्राप्तः, कतिपयैः—कियद्भिर्मुनिभिः परिकरितः—परिवृतः समवसृतः ॥ १२ ॥ तस्य—गौतमस्वामिन आगमनं श्रुत्वा सकलः—समस्तः नरनाथप्रमुखो—राजादिलोकः निजनिजऋद्ध्या समेतः—संयुक्तः झटिति—शीघ्रं उद्याने समागतः ॥ १३ ॥

पंचविहं अभिगमणं, काउं तिपयाहिणाउ दाऊणं । पणमिय गोयमचलणे, उवविट्ठो उचियभूमीए ॥ १४ ॥
भयवंपि सजलजलहर–गंभीरसरेण कहिउमाढत्तो । धम्मसरूवं सम्मं, परोवयारिक्कतल्लिच्छो ॥ १५ ॥
भो भो महाणुभागा ! दुलहं लहिऊण माणुसं जंमं । खित्तकुलाइपहाणं, गुरुसामग्गिं च पुण्णवसा ॥ १६ ॥
पंचविहंपि पमायं, गुरुयावायं विवज्जिउं झत्ति । सद्धम्मकम्मविसए, समुज्जमो होइ कायव्वो ॥१७॥ युग्मम् ॥
सो धम्मो चउभेओ, उवइट्ठो सयलजिणवरिंदेहिं । दाणं सीलं च तवो, भावोऽवि अ तस्सिमे भेया ॥ १८ ॥

ततः पञ्चविधं अभिगमनं–सचित्तद्रव्यव्युत्सर्जनादिकं कृत्वा पुनस्तिस्रः प्रदक्षिणाः दत्त्वा गौतमस्वामिचरणौ प्रणम्य उचितायां–स्वस्वयोग्यायां भूमौ उपविष्टः ॥१४॥ भगवान् गौतमोऽपि सजलो यो जलधरो–मेघः तद्वद्गम्भीरस्वरेण सम्यग्धर्मस्वरूपं कथयितुं आढत्तोत्ति–आरब्धः–प्रारम्भं कृतवान्, कीदृशो भगवान्?–परोपकारे एका सा एव लिप्सा यस्य स तथा परोपकारैकतत्पर इत्यर्थः ॥ १५ ॥ अहो महानुभावाः! पुण्यवशात् दुर्लभं मानुष्यं जन्म लब्ध्वा पुनः प्रधानं क्षेत्रकुलादि–आर्यक्षेत्रार्यकुलादिकं लब्ध्वा च पुनः गुरुसामग्रीं–सद्गुरुसंयोगं लब्ध्वा–प्राप्य ॥१६॥ मज्जं विसयकसायेत्यादिकं पञ्चविधं–पञ्चभेदं पुनः गुरुकोऽपायः–कष्टं यस्मात् स तं महाकष्टकारणमित्यर्थः, एवंविधं प्रमादं झटिति–शीघ्रं विवर्ज्य–वर्जयित्वा सद्धर्मकर्मविषये–सम्यग्धर्मकार्यविषये इत्यर्थः, सं–सम्यक्प्रकारेण उद्यमः कर्त्तव्यो भवति, कर्तुं योग्योऽस्तीत्यर्थः ॥१७॥ स धर्मश्चतुर्भेदः–चतुष्प्रकारः, सकलजिनवरेन्द्रैः उपदिष्टः–कथितः, तानेव भेदानाह–दानं १ शीलं २ तपः ३ भावः ४, अपिचेति समुच्चये, अस्य धर्मस्य इमे चत्वारो भेदाः॥१८॥

तत्थवि भावेण विणा, दाणं नहु सिद्धिसाहणं होई । सीलंपि भाववियलं, विहलं चिय होइ लोगंमि ॥ १९ ॥
भावं विणा तवोविहु, भवोहवित्थारकारणं चेव । तम्हा नियभावुच्चिय, सुविसुद्धो होइ कायव्वो ॥ २० ॥
भावोवि मणोविसओ, मणं च अइदुज्जयं निरालंबं । तो तस्स नियमणत्थं, कहियं सालंबणं झाणं ॥ २१ ॥
आलंबणाणि जइविहु, बहुप्पयाराणि संति सत्थेसु । तहविहु नवपयझाणं, सुपहाणं बिंति जगगुरुणो ॥ २२ ॥
अरिहंसिद्धायरिया, उज्झाया साहुणो अ सम्मत्तं । नाणं चरणं च तवो, इय पयनवगं मुणेयव्वं ॥ २३ ॥

तत्रापि भावेन विना दानं सिद्धिसाधकं–मोक्षदायकं न भवति, हुः–निश्चये शीलमपि भावविकलं–भावरहितं सत् लोके विफलं–निष्फलमेव भवति, चियेत्यवधारणे ॥१९॥ भावं विना तपोऽपि भवौघस्य–भवसमूहस्य–भवप्रवाहस्य वा यो विस्तार तस्य कारणमेवास्ति, एतावता भवभ्रमणकारणं न तु मुक्तिकारणमित्यर्थः, तस्मात्कारणात् निजभाव एव सुतरां विशुद्धो–निर्मलः कर्त्तव्यो भवति, कर्त्तुं योग्योऽस्ति ॥ २० ॥ भावोऽपि मनोविषयो–मनोगोचरोऽस्ति, मनश्च निरालम्बं–आलम्बनरहितं सत् अतिदुर्जयं–अतिशयेन दुर्जयं विद्यते, ततस्तस्मात् कारणात् तस्य मनसो नियमनार्थं–वशीकरणार्थं सालम्बनं–आलम्बनसहितं ध्यानं कथितम् ॥ २१ ॥ यद्यपि आलम्बनानि शास्त्रेषु बहुप्रकाराणि संति, तथापि हु इति निश्चयेन जगद्गुरवः–श्रीजिनेन्द्रा नवपदध्यानं सुतरां प्रधानं आलम्बनं ब्रुवंति ॥ २२ ॥ अथ नवपदनामान्याह–अर्हन्तः १ सिद्धा २ आचार्या ३ उपाध्यायाः ४ साधवश्च ५ सम्यक्त्वं ६ ज्ञानं ७ चारित्रं ८ तपः ९ इति पदनवकं ज्ञातव्यम् ॥ २३ ॥

तत्थऽरिहंतेऽट्ठारसदोसविमुक्के विसुद्धनाणमए । पयडियतत्ते नयसुरराए झाएह निच्चंपि ॥ २४ ॥

पनरसभेयपसिद्धे, सिद्धे घणकम्मबंधणविमुक्के । सिद्धाणंतचउक्के, झायह तम्मयमणा सययं ॥ २५ ॥

पंचायारपवित्ते, विसुद्धसिद्धंतदेसणुज्जुत्ते । परउवयारिक्कपरे, निच्चं झाएह सूरिवरे ॥ २६ ॥

तत्र–तस्मिन् पदनवके प्रथमपदे नित्यमपि अर्हतो ध्यायत, यूयमिति शेषः, कीदृशान् अर्हतः ?–अष्टादशदोषविमुक्तान् पुनर्विशुद्धं–निर्मलं यत् ज्ञानं तत्स्वरूपमयानिति, पुनः प्रकटितानि तत्त्वानि यैः ते तान्, पुनर्नताः सुरराजा–इन्द्रा येभ्यस्ते तान् ॥२४॥ भो भव्या यूयं तन्मयमनसः सन्तः जिनाजिनादिपञ्चदशभेदैः प्रसिद्धान् सततं–निरन्तरं ध्यायत, तन्मयं–सिद्धमयं मनो येषां ते इति समासः, कीदृशान् सिद्धान् ?–घनानि–निविडानि यानि कर्म्मबन्धनानि तेभ्यो विमुक्तान्, पुनः सिद्धं–निष्पन्नं अनन्तचतुष्कं–अनन्तज्ञानदर्शनसम्यक्त्वाकरणवीर्यरूपं ( चतुष्कं ) येषां ते तान् ॥२५॥ भो भव्या यूयं नित्यं सूरिवरान्–आचार्यान् ध्यायत, कीदृशान् सूरिवरान् ?–ज्ञानाचारादिपञ्चाचारैः पवित्रान्–निर्मलान्, पुनर्विशुद्धा–निर्मला ये सिद्धान्ता–जिनागमाः तेषां देशना–उपदेशस्तत्र उद्यता–उद्यमवन्तः तान्, पुनः ?–परोपकार एव एकं–प्रधानं येषां ते तान् परोपकारकरणैकतत्परानित्यर्थः ॥ २६ ॥

गणतित्तीसु निउत्ते, सुत्तत्थज्झावणंमि उज्जुत्ते । सज्झाए लीणमणे, सम्मं झाएह उज्झाए ॥ २७ ॥

सव्वासु कम्मभूमिसुं, विहरंते गुणगणेहि संजुत्ते । गुत्ते मुत्ते झायह, मुणिराए निट्ठियकसाए ॥ २८ ॥

सव्वन्नुपणीयागमपयडियतत्तत्थसद्दहणरूवं । दंसणरयणपईवं, निच्चं धारेह मणभवणे ॥ २९ ॥

जीवाजीवाइपयत्थसत्थतत्तावबोहरूवं च । नाणं सव्वगुणाणं, मूलं सिक्खेह विणएणं ॥ ३० ॥

भो भव्या यूयं सम्यक्-यथा स्यात्तथा उपाध्यायान् ध्यायत, कीदृशान् उपाध्यायान् ?-गणस्य-गच्छस्य तप्तिषु-सारणादिषु नियुक्तास्तान् अधिकारिण इत्यर्थः, पुनः ?-सूत्रार्थाध्यापने उद्यतान्-उद्यमवत इत्यर्थः, स्वाध्याये लीनं-मग्नं मनो येषां ते तान् ॥२७॥ भो भव्या यूयं सर्वासु कर्मभूमिषु-भरतादिपञ्चदशक्षेत्रेषु विचरतो मुनिराजान्-साधून् ध्यायत, कीदृशान् मुनिराजान् ?-गुणानां गणैः-समूहैः संयुक्तान्, पुनः ?-गुप्तान्-गुप्तित्रययुक्तान्, पुनः ?-मुक्तान् सर्वसङ्गवर्जितान्, पुनः ?-निष्ठिता-अन्तं प्राप्ताः कषाया येषां ते तान् ॥ २८ ॥ भो भव्याः ! सर्वज्ञैः प्रणीता-उक्ताः ये आगमाः-सिद्धान्तास्तेषु प्रकटिताः-प्रकटीकृता ये तत्त्वार्थाः तद्रूपा अर्थास्तेषां यत् श्रद्धानं तद्रूपं दर्शनरत्नप्रदीपं-सम्यक्त्वरूपरत्नप्रदीपकं नित्यं-सर्वदा मनोभवने-मनोमन्दिरे धारयत ॥ २९ ॥ भो भव्याः ! जीवाजीवादयो ये पदार्थास्तेषां सार्थः-समूहस्तस्य यस्तत्त्वावबोधः-तत्त्वज्ञानं स्वरूपं यस्य तत् एवंविधं च-पुनः ज्ञानं विनयेन-विनयं कृत्वा यूयं शिक्षत, कीदृशं ज्ञानं ?-सर्वगुणानां मूलं-मूलकारणम् ॥ ३० ॥

असुहकिरियाण चाओ, सुहासु किरियासु जो य अपमाओ । तं चारित्तं उत्तमगुणजुत्तं पालह निरुत्तं ॥ ३१ ॥

घणकम्मतमोभरहरणभाणुभूयं दुवालसंगधरं । नवरमकसायतावं, चरेह सम्मं तवोकम्मं ॥ ३२ ॥

एयाइं नवपयाइं, जिणवरधम्मंमि सारभूयाइं । कल्लाणकारणाइं, विहिणा आराहियव्वाइं ॥ ३३ ॥

अन्नं च–एएहिं नवपएहिं, सिद्धं सिरिसिद्धचक्कमाउत्तो । आराहंतो संतो, सिरिसिरिपालुव्व लहइ सुहं ॥ ३४ ॥

यः अशुभक्रियाणां–पापव्यापाराणां त्यागश्च पुनः शुभासु क्रियासु–निरवद्यव्यापारेषु अप्रमादः–अप्रमत्तता तच्चारित्रं यूयं पालयत, कीदृशं तत्?–उत्तमगुणैर्युक्तम्, पुनः कीदृशं?–निरुक्तम्–पदभञ्जनेन निष्पन्नं, तथाहि–चयः कर्मसञ्चयो रिक्तो भवति अनेनेति चारित्रं ( बाहुलकात् साधु ) ॥ ३१ ॥ भो भव्याः! यूयं सम्यक् तपःकर्म–तपःक्रियां चरत–आचरत, कीदृशं तपःकर्म?–घनानि–निबिडानि यानि कर्म्माणि–ज्ञानावरणादीनि तान्येव तमांसि–अन्धकाराणि तेषां भरः–समूहः तस्य हरणे भानुभूतं–सूर्यतुल्यं, पुनः कीदृशं तपः?–द्वादशाङ्गधरं तपसो द्वादशभेदत्वात्, सूर्यपक्षे लोके द्वादशसूर्याणां रूढत्वात्, नवरं इति विशेषः सूर्यस्तापकारको भवति इदं तपस्तु अकषायतापं–न विद्यते कषायरूपस्तापो यस्मिंस्तत्, एतावता कषायरहितमेव तपः सेव्यमित्यर्थः ॥ ३२ ॥ एतानि नवपदानि जिनवरधर्म्मे–श्रीजिनोक्तधर्म्मविषये सारभूतानि अत एव कल्याणकारकाणि सन्ति, तस्माद्विधिना आराध्यानि भवद्भिरिति शेषः ॥ ३३ ॥ अन्यच्च–अन्यदपि शृणुत एतैर्नवभिः पदैः सिद्धं–निष्पन्नं श्रीसिद्धचक्रं आयुक्त–उद्यमयुक्त आराधयन् सन् श्रीश्रीपालनामा राजा इव सुखं लभते मनुष्य इति शेषः ॥ ३४ ॥

तो पुच्छइ मगहेसो, को एसो मुणिवरिंद ! सिरिपालो ?। कह तेण सिद्धचक्कं, आराहिय पावियं सुक्खं ?॥३५॥

तो भणइ मुणी निसुणसु, नरवर ! अक्खाणयं इमं रम्मं । सिरिसिद्धचक्कमाहप्पसुंदरं परमचुज्जकरं ॥ ३६ ॥

तथाहि—इत्थेव भरहखित्ते, दाहिणखंडंमि अत्थि सुपसिद्धो । सव्वड्ढिकयपवेसो, मालवनामेण वरदेसो ॥ ३७ ॥

सो य केरिसो ?—पए पए जत्थ सुगुत्तिगुत्ता, जोगप्पवेसा इव संनिवेसा ।

पए पए जत्थ अगंजणीया, कुडुंबमेला इव तुंगसेला ॥ ३८ ॥

ततो गौतमस्वाम्युपदेशानन्तरं मगधेशः—श्रेणिकः पृच्छति हे मुनिवरेन्द्र ! एष श्रीपालः कः ? तेन श्रीपालेन राज्ञा श्रीसिद्धचक्रं आराध्य कथं सुखं प्राप्तं—लब्धम् ? ॥३५॥ ततो मुनिः—गौतमो भणति, हे नरवर !—हे श्रेणिकराजन् ! इदं श्रीपालनृपसम्बन्धि रम्यं मनोज्ञं आख्यानकं—कथानकं त्वं शृणु, कीदृशं आख्यानकम् ?—श्रीसिद्धचक्रस्य यत् माहात्म्यं तेन सुन्दरं—रमणीयं अत एव परमाश्चर्यकरम् ॥३६॥ तदेव दर्शयति, अत्रैव भरतक्षेत्रे दक्षिणखण्डे—दक्षिणार्द्धे मालवनाम्ना सुप्रसिद्धो वरदेशोऽस्ति, कीदृशो मालवदेशः ? सर्वर्ध्या कृतः प्रवेशो यस्मिन् स ईदृशः ॥३७॥ च पुनः स कीदृशः ?—यत्र मालवदेशे पदे पदे संनिवेशा—ग्रामाः सन्ति, कीदृशाः ? सुगुप्तिभिः—सम्यग्वृत्तिभिर्गुप्ता—रक्षिता वेष्टिता इतियावत्, संनिवेशाः के इव ?—योगप्रवेशा इव योगे प्रवेशो येषां ते तथोक्ता योगिन इवेत्यर्थः, यतः योगिनोऽपि सुगुप्तिभिर्मनोगुप्त्यादिभिर्गुप्ता भवन्ति, पुनः यत्र देशे पदे पदे तुङ्गा—उच्चैस्तराः शैलाः—पर्वताः सन्ति, कीदृशाः ?—अगंजनीयाः—जनानां अलंघनीयाः, के इव कुटुम्बमेला इव ?—यतः तेऽपि लोकानामगञ्जनीया भवन्ति ॥ ३८ ॥

पए पए जत्थ रसाउलाओ, पणंगणाओव्व तरंगिणीओ ।
पए पए जत्थ सुहंकराओ, गुणावलीओव्व वणावलीओ ॥ ३९ ॥

पए पए जत्थ सवाणियाणि, महापुराणीव महासराणी । पए पए जत्थ सगोरसाणि, सुहीमुहाणीव सुगोउलाणि॥४०॥
तत्थ य मालवदेसे, अकयपवेसे दुकालडमरेहिं । अत्थि पुरी पोराणा, उज्जेणी नाम सुपहाणा ॥ ४१ ॥

पुनः यत्र देशे पदे पदे रसाकुला–जलभृताः तरङ्गिण्यो–नद्यः सन्ति, का इव ?–पणाङ्गना इव–वेश्या इव, यतस्ता अपि रसाकुलाः शृङ्गाररस्य (सेन) व्याप्ता भवन्ति, पुनर्यत्र देशे पदे पदे सुखङ्कराः–सुखकारिण्यः वनावलयो–वनानां श्रेणयः सन्ति, का इव ?–गुणानामावलयः–श्रेण्य इव, यतस्ता अपि सुखङ्करा भवन्ति ॥ ३९ ॥ पुनर्यत्र देशे पदे पदे सपानीयानि–पानीयसहितानि जलभृतानीति यावत् महान्ति सरांसि सन्ति, कानीव ?–महापुराणीव, यतः तान्यपि सह वाणिजैः–वणिग्भिर्वर्तन्ते इति सवाणिजानि भवन्ति, पुनर्यत्र देशे पदे पदे सुष्ठु–शोभनानि गोकुलानि सन्ति, कीदृशानि ?–सह गोरसेन–दधिदुग्धादिना वर्तन्ते इति सगोरसानि, तानि कानि इव ?–सुधियां–पण्डितानां मुखानि इव, यतस्तान्यपि गोः–वाण्या रसो गोरसः तेन सहितानि भवन्ति ॥४०॥
तत्र च–तस्मिन् मालवदेशे पुराणा–जीर्णा "उज्जयिनी" नाम सुतरां प्रधाना पुरी अस्ति, कीदृशे मालवदेशे ?–दुष्कालेत्यादि, दुष्कालो–दुर्भिक्षः डमरो–विप्लवः बलात् परद्रव्यापहरणा लुण्टिकोपद्रव इतियावत्, दुष्कालश्च डमरश्च दुष्कालडमरौ ताभ्यां अकृतः प्रवेशो यस्मिन् स तस्मिन् ॥ ४१ ॥

सा य केरिसा ?—अणेगैसो जत्थ पयावईओ, नरुत्तमाणं चैं न जत्थ संखा ।
महेसरा जत्थ तिहे गिहेसु, सुचीवरा जत्थ समग्गलोया ॥ ४२ ॥
घरे घरे जत्थ रमंति गोरी—गणा सिरीओ अ पए पए अ। वणे वणे यावि अणेगरंभा, रई अ पीईविय ठाणठाणे ॥४३॥

सा च उज्जयिनीपुरी कीदृशी ? इत्याह—यत्र—यस्यां नगर्यां अनेकशः प्रजानां पतयः सन्ति, लोके तु एक एव प्रजापतिः ब्रह्मा प्रसिद्धोऽस्ति, तत्र तु अनेके प्रजानां—सन्ततीनां पतयः—स्वामिनः सन्तीत्यर्थः, पुनः यत्र नगर्यां नरोत्तमानां—पुरुषोत्तमानां सङ्ख्या नास्ति, लोके तु एक एव पुरुषोत्तमः—श्रीकृष्णः प्रसिद्धोऽस्ति, तत्र तु बहवः पुरुषोत्तमाः सन्तीत्यर्थः, पुनः यत्र नगर्यां गृहे गृहे महेश्वराः—महार्द्धिकाः सन्ति, लोके तु एक इव महेश्वरः प्रसिद्धोऽस्ति, एकादश वा, तत्र तु गृहे गृहे इभ्याः सन्तीत्यर्थः, पुनः यत्र नगर्यां समग्रलोकाः—सर्वलोकाः सचीवराः सन्ति, लोके तु एक एव शच्या—इन्द्राण्या वरः शचीवर—इन्द्रः प्रसिद्धोऽस्ति, तत्र तु सर्वेऽपि लोकाः सह चीवरैः—वस्त्रैर्वर्त्तन्ते इति सचीवराः सन्तीत्यर्थः ॥ ४२ ॥ यत्र नगर्यां गृहे गृहे गौर्यः—अदृष्टरजसः कन्याः तासां गणाः—समूहा रमन्ते क्रीडन्ति, लोके तु कैलासे रममाणा एकैव गौरी—पार्वती प्रसिद्धाऽस्ति, तत्र तु गृहे गृहे गौर्यः सन्तीत्यर्थः, लोके तु एकैव श्रीः—कृष्णभार्याऽस्ति, यत्र पदे पदे श्रियो—लक्ष्म्यः सन्ति, लोके तु एकैव रम्भा—देवाङ्गना प्रसिद्धाऽस्ति, यस्यां नगर्यां तु वने वनेऽपि अनेका रम्भाः—कदल्यः सन्ति, पुनः यत्र रतिश्च प्रीतिरपि च स्थाने स्थाने अस्ति, लोके तु रतिः—कामस्त्री सा एकैवास्ति, प्रीतिरपि देवाङ्गना एकैवास्ति, तत्र तु स्थाने स्थाने रतिः—परस्परराग: प्रीतिश्चास्ति ॥ ४३ ॥

पए पए जत्थ रसाउलाओ, पणंगणाओव्व तरंगिणीओ ।
पए पए जत्थ सुहंकराओ, गुणावलीओव्व वणावलीओ ॥ ३९ ॥

पए पए जत्थ सवाणियाणि, महापुराणीव महासराणी । पए पए जत्थ सगोरसाणि, सुहीमुहाणीव सुगोउलाणि॥४०॥
तत्थ य मालवदेसे, अकयपवेसे दुकालडमरेहिं । अत्थि पुरी पोराणा, उज्जेणी नाम सुपहाणा ॥ ४१ ॥

पुनः यत्र देशे पदे पदे रसाकुला–जलभृताः तरङ्गिण्यो–नद्यः सन्ति, का इव?–पणाङ्गना इव–वेश्या इव, यतस्ता अपि रसाकुलाः शृङ्गाररस्य (सेन) व्याप्ता भवन्ति, पुनर्यत्र देशे पदे पदे सुखङ्कराः–सुखकारिण्यः वनावलयो–वनानां श्रेणयः सन्ति, का इव?–गुणानामावलयः–श्रेण्य इव, यतस्ता अपि सुखङ्करा भवन्ति ॥ ३९ ॥ पुनर्यत्र देशे पदे पदे सपानीयानि–पानीयसहितानि जलभृतानीति यावत् महान्ति सरांसि सन्ति, कानीव?–महापुराणीव, यतः तान्यपि सह वाणिजैः–वणिग्भिर्वर्तन्ते इति सवाणिजानि भवन्ति, पुनर्यत्र देशे पदे पदे सुष्ठु–शोभनानि गोकुलानि सन्ति, कीदृशानि?–सह गोरसेन–दधिदुग्धादिना वर्तन्ते इति सगोरसानि, तानि कानि इव?–सुधियां–पण्डितानां मुखानि इव, यतस्तान्यपि गोः–वाण्या रसो गोरसः तेन सहितानि भवन्ति ॥४०॥ तत्र च–तस्मिन् मालवदेशे पुराणा–जीर्णा "उज्जयिनी" नाम सुतरां प्रधाना पुरी अस्ति, कीदृशे मालवदेशे?–दुष्कालेत्यादि, दुष्कालो–दुर्भिक्षः डमरो–विप्लवः बलात् परद्रव्यापहरणा लुण्टिकोपद्रव इतियावत्, दुष्कालश्च डमरश्च दुष्कालडमरौ ताभ्यां अकृतः प्रवेशो यस्मिन् स तस्मिन् ॥ ४१ ॥

पढमा माहेसरकुलसंभूया तेण मिच्छदिट्ठित्ति । बीया सावगधूया तेणं सा सम्मदिट्ठित्ति ॥ ४८ ॥
ताओ सरिसवयाओ, समसोहग्गाउ सरिसरूवाओ। सावत्तेवि हु पायं, परुप्परं पीतिकलियाओ ॥ ४९ ॥
नवरं ताणमणट्ठियधम्मसरूवं वियारयंताणं। दूरेण विसंवाओ, विसपीऊसेहिँ सारिच्छो ॥ ५०॥
ताओ अ रमंतीओ, नवनवलीलाहिं नरवरेण समं । थोवंतरंमि समए, दोवि सगब्भाउ जायाओ ॥ ५१ ॥

तत्र प्रथमा सौभाग्यसुन्दरी माहेश्वरकुले सम्भूता–उत्पन्नाऽस्ति तेन कारणेन मिथ्या–विपरीता दृष्टिर्यस्याः सा मिथ्यादृष्टिरिति आसीत्, द्वितीया श्रावकपुत्री अस्ति, तेन कारणेन सा रूपसुन्दरी समीचीना–सत्या दृष्टिर्यस्याः सा सम्यग्दृष्टिः इत्यासीत् ॥४८॥ ते द्वे राज्यौ कीदृशौ स्तः इत्याह–सदृशं वयो–यौवनावस्था ययोस्ते सदृशवयसौ पुनः समं–सदृशं सौभाग्यं ययोः ते समसौभाग्ये पुनः सदृशं रूपं सौन्दर्यं ययोस्ते समरूपे पुनः सापत्नोभोत्याभावः सापत्नं तस्मिन् सापत्नेऽपि सति हु इति–निश्चितं प्रायो–बाहुल्येन परस्परं प्रीत्या कलिते युक्ते–स्तः ॥ ४९ ॥ नवरं इति विशेषः स्वमनःस्थितधर्मस्वरूपं विचारयन्त्योस्तयोः द्वयोः राज्योः दूरेण-अत्यर्थं विसँवादो–विवाद आसीत्, कीदृशो विसँवादः !–विषपीयूषैः–विषामृतैः सदृक्षः परस्परविरुद्धत्वादिति भावः ॥५०॥ ते च द्वे अपि राज्यौ नरवरेण राज्ञा समं–सार्द्धं नवनवलीलाभिः–अपूर्वापूर्वक्रीडाभिः रममाणे–क्रीडन्त्यौ स्तोकश्वासावन्तर इति तस्मिन् समये–काले सगर्भे–गर्भवत्यौ जाते ॥५१ ॥

तीसे पुरीई सुरवरपुरीई अहियाइ वण्णणं काउं । जइ निउणबुद्धिकलिओ, सक्कगुरू चेव सक्केइ ॥ ४४ ॥
तत्थत्थि पुहविपालो, पयपालो नामओ अ गुणओ अ । जस्स पयावो सोमो, भीमो विय सिट्ठदुट्ठजणे ॥४५॥
तस्सवरोहे बहुदेहसोहअवहरियगोरिगव्वेवि । अच्चंतं मणहरणे, निउणाओ दुन्नि देवीओ ॥ ४६ ॥
सोहग्गलडहदेहा, एगा सोहग्गसुंदरीनामा । बीया अ रूवसुंदरि, नामा रूवेण रइतुल्ला ॥ ४७ ॥

सुरवरपुर्या–इन्द्रपुर्या अधिकायाः तस्या उज्जयिनीपुर्या वर्णनं कर्तुम् यदि निपुणबुद्धया कलितो–युक्तः कश्चित् शक्नोति तर्हि शक्रगुरुः–बृहस्पतिरेव शक्नोति–समर्थो भवति नान्य इति भावः, लोकोक्त्या बृहस्पतिः शक्रगुरुरुच्यते ॥ ४४ ॥ तत्र नगर्यां प्रजापालो नाम पृथिवीपालो–राजाऽस्ति, स च नामतश्च गुणतश्च प्रजापाल एव, प्रजाः पालयतीति व्युत्पत्तेः, स कीदृशः ? इत्याह—यस्य प्रतापः शिष्टेषु दुष्टेषु च सौम्यो मनोहरो भीमो–भयङ्करश्चापि क्रमेण विद्यते, शिष्टेषु–सत्पुरुषेषु सौम्यः दुष्टेषु भीम इत्यर्थः ॥४५॥ तस्य राज्ञो–अवरोधेऽन्तःपुरे द्वे देव्यौ–राज्यौ मनोहरणे–पत्युर्मनोरञ्जने अत्यन्तं निपुणे स्तः, कीदृशेऽवरोधे ?–बहुदेहशोभाऽपहृतगौरीगर्वेऽपि–बह्वी या देहस्य–शरीरस्य शोभा तया अपहृतो गौर्याः–पार्वत्या गर्वो–अहङ्कारो येन स तस्मिन् एतादृशेऽपि अन्तःपुरे द्वे देव्यौ विशेषतः सौभाग्यवत्यौ स्त इत्यर्थः ॥ ४६ ॥ ते द्वे एव नामत आह–तयोर्मध्ये एका सौभाग्यसुन्दरी नामा द्वितीया च रूपसुन्दरी नामा, तत्राद्या कीदृशी ?–सौभाग्यलडहदेहा–सौभाग्येन मनोहरो देहो यस्याः सा तथा, द्वितीया रूपेण रतितुल्या ॥ ४७ ॥

अन्नाइंपि कुंडलविंटलाइं करलाघवाइकम्माइं । सत्थाइं सिक्खियाइं, तीइ चमुक्कारजणयाइं ॥ ५७ ॥
सा कावि कला तं किंपि, कोसलं तं च नत्थि विन्नाणं । जं सिक्खियं न तीए, पन्नाअभिओगजोगेणं ॥५८॥
सविसेसं गीयाइसु, निउणा वीणाविणोयलीणा सा । सुरसुंदरी वियड्ढा,—जाया पत्ता य तारुन्नं ॥ ५९ ॥
जारिसओ होइ गुरू, तारिसओ होइ सीसगुणजोगो । इत्तुच्चिय सा मिच्छ—दिट्ठी उक्किट्ठदप्पा अ ॥६०॥
तह मयणसुंदरीवि हु, एया उ कलाओ लीलमित्तेण । सिक्खेइ विमलपन्ना, धन्ना विणएण संपन्ना ॥ ६१ ॥

तथा सुरसुन्दर्या अन्यान्यपि कुण्टलविण्टलानि—कार्मणवशीकरणादीनि शिक्षितानि, पुनः करलाघवादीनि—हस्तचापलादीनि कर्माणि—क्रियाविशेषाः शिक्षितानि, तथा अन्यान्यपि चमत्कारजनकानि—जनानां चित्तेषु चमत्कारोत्पादकानि शास्त्राणि शिक्षितानि ॥५७॥ सा कापि कला नास्ति तत् किमपि कौशल्यं—निपुणत्वं नास्ति, च पुनस्तत् विज्ञानं—चातुर्य्यं नास्ति, यत्तया सुरसुन्दर्या न शिक्षितं, केनेत्याह—प्रज्ञा—बुद्धिरभियोगः—उद्यमस्तयोर्योगेन ॥५८॥ सविशेषं गीतादिषु निपुणा—दक्षा पुनर्वीणाविनोदे लीना—मग्ना सा सुरसुन्दरी—विदग्धा छेका जाता तारुण्यंच—यौवनं प्राप्ता ॥५९॥ यादृशको गुरुर्भवति तादृशक एव प्रायः शिष्ये गुणयोगो—गुणसम्बन्धो भवति, इतः—अस्मात्कारणादेव सा सुरसुन्दरी मिथ्यादृष्टिः उत्कृष्टदर्प्पा च आसीत्, मिथ्या दृष्टिर्यस्याःसा उत्कृष्टो दर्पो—मानो यस्याः सा इति समासः ॥६०॥ तथा मदनसुन्दरी अपि एता प्रागुक्ता लेखनाद्याः लीलामात्रेण शिक्षति, कीदृशी मदनसुन्दरी ?—विमला—निर्मला प्रज्ञा—बुद्धिर्यस्याः सा विमलप्रज्ञा तथा धन्या—धर्मधनं लब्धी तथा विनयेन सम्पन्ना—युक्ता ॥ ६१ ॥

समयंमि पसूयाओ, जायाओ कन्नगाउ दोहिंपि। नरनाहोवि सहरिसो, वद्धावणयं करावेई ॥ ५२ ॥

सोहग्गसुंदरी नंदणाइ सुरसुंदरित्ति वरनामं। बीयाइ मयणसुंदरि, नामं च ठवेइ नरनाहो ॥ ५३ ॥

समये समप्पियाओ, ताओ सिवधम्मजिणमयविऊणं। अज्झावयाण रन्ना, सिवभूतिसुबुद्धिनामाणं॥ ५४ ॥

सुरसुंदरी अ सिक्खइ, लिहियं गणियं च लक्खणं छंदं। कव्वमलंकारजुयं, तक्कं च पुराणसमिईओ ॥ ५५ ॥

सिक्खेइ भरहसत्थं, गीयं नट्टं च जोइसतिगिच्छं। विज्जं मंतं तंतं, हरमेहलचित्तकम्माइं ॥ ५६ ॥

द्वाभ्यामपि राज्ञीभ्यां समये-पूर्णकाले कन्यके जाते-प्रसूते नरनाथो-राजापि सहर्षः सन् वर्द्धापनकं कारयति ॥ ५२ ॥ नरनाथो-राजा सौभाग्यसुन्दर्या या नन्दान्दाना नाम पुत्री तस्याः सुरसुन्दरीति वरं-प्रधानं नाम स्थापयति, च पुनः द्वितीयाया रूप्यसुन्दरीपुत्र्या मदनसुन्दरीति नाम स्थापयति ॥ ५३ ॥ समयेऽध्ययनकाले ते द्वे अपि कन्यके शिवधर्मजिनमतविदोः-शिवधर्मजिनधर्मज्ञायकयोः शिवभूतिसुबुद्धिनाम्नोः अध्यापकयोः-पाठकयो राज्ञा समर्पिते अध्ययनार्थं दत्ते इत्यर्थः ॥ ५४ ॥ सुरसुन्दरी च प्रथमं लिखितं-लेखनकलां शिक्षति च पुनर्गणितं-गणनकलां शिक्षति, ततो वस्तूनां लक्षणं शिक्षति तथा छन्दः-शास्त्रं तथाऽलङ्कारैर्युतं काव्यशास्त्रं तथा पुराणानि स्मृतिश्च शिक्षति ॥ ५५ ॥ पुनर्भरतशास्त्रं-नाट्यशास्त्रं शिक्षति, तथा गीतं-गानं च पुनर्नाट्यं-नर्त्तितं शिक्षति, तथा ज्योतिश्शास्त्रं रोगचिकित्साशास्त्रं च शिक्षति, पुनर्विद्या मन्त्रं च शिक्षति, तथा हरमेखलचित्रकर्माणि-कलाविशेषान् शिक्षति ॥ ५६ ॥

अन्नाइंपि कुंडलविंटलाइं करलाघवाइकम्माइं। सत्थाइं सिक्खियाइं, तीइ चमुक्कारजणयाइं ॥ ५७ ॥
सा कावि कला तं किंपि, कोसलं तं च नत्थि विन्नाणं । जं सिक्खियं न तीए, पन्नाअभिओगजोगेणं ॥५८॥
सविसेसं गीयाइसु, निउणा वीणाविणोयलीणा सा । सुरसुंदरी वियड्ढा,—जाया पत्ता य तारुन्नं ॥ ५९ ॥
जारिसओ होइ गुरू, तारिसओ होइ सीसगुणजोगो। इत्तुच्चिय सा मिच्छ—दिट्ठी उक्किट्ठदप्पा अ ॥६०॥
तह मयणसुंदरीवि हु, एया उ कलाओ लीलमित्तेण। सिक्खेइ विमलपन्ना, धन्ना विणएण संपन्ना ॥ ६१ ॥

तथा सुरसुन्दर्या अन्यान्यपि कुण्टलविण्टलानि—कार्मणवशीकरणादीनि शिक्षितानि, पुनः करलाघवादीनि—हस्तचापल्यानि कर्माणि—क्रियाविशेषाः शिक्षितानि, तथा अन्यान्यपि चमत्कारजनकानि—जनानां चित्तेषु चमत्कारोत्पादकानि शास्त्राणि शिक्षितानि ॥५७॥ सा कापि कला नास्ति तत् किमपि कौशल्यं—निपुणत्वं नास्ति, च पुनस्तत् विज्ञानं—चातुर्य्यं नास्ति, यत्तया सुरसुन्दर्या न शिक्षितं, केनेत्याह—प्रज्ञा—बुद्धिरभियोगः—उद्यमस्तयोर्योगेन ॥५८॥ सविशेषं गीतादिषु निपुणा—दक्षा पुनर्वीणाविनोदे लीना—मग्ना सा सुरसुन्दरी—विदग्धा छेका जाता तारुण्यंच—यौवनं प्राप्ता ॥५९॥ यादृशको गुरुर्भवति तादृशक एव प्रायः शिष्ये गुणयोगो—गुणसम्बन्धो भवति, इतः—अस्मात्कारणादेव सा सुरसुन्दरी मिथ्यादृष्टिः उत्कृष्टदर्प्पा च आसीत्, मिथ्या दृष्टिर्यस्याःसा उत्कृष्टो दर्पो—मानो यस्याः सा इति समासः ॥६०॥ तथा मदनसुन्दरी अपि एता प्रागुक्ता लेखनाद्याः लीलामात्रेण शिक्षति, कीदृशी मदनसुन्दरी?—विमला—निर्मला प्रज्ञा—बुद्धिर्यस्याः सा विमलप्रज्ञा तथा धन्या—धर्मधनं लब्धी तथा विनयेन सम्पन्ना—युक्ता ॥ ६१ ॥

समयंमि पसूयाओ, जायाओ कन्नगाउ दोहिंपि। नरनाहोवि सहरिसो, वद्धावणयं करावेई ॥ ५२ ॥
सोहग्गसुंदरी नंदणाइ सुरसुंदरित्ति वरनामं। बीयाइ मयणसुंदरि, नामं च ठवेइ नरनाहो ॥ ५३ ॥
समये समप्पियाओ, ताओ सिवधम्मजिणमयविऊणं। अज्झावयाण रन्ना, सिवभूतिसुबुद्धिनामाणं॥ ५४ ॥
सुरसुंदरी अ सिक्खइ, लिहियं गणियं च लक्खणं छंदं। कव्वमलंकारजुयं, तक्कं च पुराणसमिईओ ॥ ५५ ॥
सिक्खेइ भरहसत्थं, गीयं नट्टं च जोइसतिगिच्छं। विज्जं मंतं तंतं, हरमेहलचित्तकम्माइं ॥ ५६ ॥

द्वाभ्यामपि राज्ञीभ्यां समये-पूर्णकाले कन्यके जाते-प्रसूते नरनाथो-राजापि सहर्षः सन् वर्द्धापनकं कारयति ॥५२॥ नरनाथो-राजा सौभाग्यसुन्दर्या या नन्दान्दान नाम पुत्री तस्याः सुरसुन्दरीति वरं-प्रधानं नाम स्थापयति, च पुनः द्वितीयाया रूप्यसुन्दरीपुत्र्या मदनसुन्दरीति नाम स्थापयति ॥५३॥ समयेऽध्ययनकाले ते द्वे अपि कन्यके शिवधर्मजिनमतविदोः-शिवधर्मजिनधर्मज्ञायकयोः शिवभूतिसुबुद्धिनाम्नोः अध्यापकयोः-पाठकयो राज्ञा समर्पिते अध्ययनार्थं दत्ते इत्यर्थः ॥५४॥ सुरसुन्दरी च प्रथमं लिखितं-लेखनकलां शिक्षति च पुनर्गणितं-गणनकलां शिक्षति, ततो वस्तूनां लक्षणं शिक्षति तथा छन्दःशास्त्रं तथाऽलङ्कारैर्युतं काव्यशास्त्रं तथा पुराणानि स्मृतिश्च शिक्षति ॥ ५५ ॥ पुनर्भरतशास्त्रं-नाट्यशास्त्रं शिक्षति, तथा गीतं-गानं च पुनर्नाट्यं-नर्त्तितं शिक्षति, तथा ज्योतिश्शास्त्रं रोगचिकित्साशास्त्रं च शिक्षति, पुनर्विद्या मन्त्रं च शिक्षति, तथा हरमेखलचित्रकर्माणि-कलाविशेषान् शिक्षति ॥ ५६ ॥

अन्नाइंपि कुंडलविंटलाइं करलाघवाइकम्माइं । सत्थाइं सिक्खियाइं, तीइ चमुक्कारजणयाइं ॥ ५७ ॥
सा कावि कला तं किंपि, कोसलं तं च नत्थि विन्नाणं । जं सिक्खियं न तीए, पन्नाअभिओगजोगेणं ॥५८॥
सविसेसं गीयाइसु, निउणा वीणाविणोयलीणा सा । सुरसुंदरी वियड्ढा,–जाया पत्ता य तारुन्नं ॥ ५९ ॥
जारिसओ होइ गुरू, तारिसओ होइ सीसगुणजोगो । इत्तुच्चिय सा मिच्छ–दिट्ठी उक्किट्ठदप्पा अ ॥६०॥
तह मयणसुंदरीवि हु, एया उ कलाओ लीलमित्तेण । सिक्खेइ विमलपन्ना, धन्ना विणएण संपन्ना ॥ ६१ ॥

तथा सुरसुन्दर्या अन्यान्यपि कुण्टलविण्टलानि–कार्मणवशीकरणादीनि शिक्षितानि, पुनः करलाघवादीनि–हस्तचापल्यादीनि कर्माणि–क्रियाविशेषाः शिक्षितानि, तथा अन्यान्यपि चमत्कारजनकानि–जनानां चित्तेषु चमत्कारोत्पादकानि शास्त्राणि शिक्षितानि ॥५७॥ सा कापि कला नास्ति तत् किमपि कौशल्यं–निपुणत्वं नास्ति, च पुनस्तत् विज्ञानं–चातुर्यं नास्ति, यत्तया सुरसुन्दर्या न शिक्षितं, केनेत्याह–प्रज्ञा–बुद्धिरभियोगः–उद्यमस्तयोर्योगेन ॥५८॥ सविशेषं गीतादिषु निपुणा–दक्षा पुनर्वीणाविनोदे लीना मग्ना सा सुरसुन्दरी–विदग्धा छेका जाता तारुण्यंच–यौवनं प्राप्ता ॥५९॥ यादृशको गुरुर्भवति तादृशक एव प्रायः शिष्ये गुणयोगो–गुणसम्बन्धो भवति, इतः–अस्मात्कारणादेव सा सुरसुन्दरी मिथ्यादृष्टिः उत्कृष्टदर्पा च आसीत्, मिथ्या दृष्टिर्यस्याःसा उत्कृष्टो दर्पो–मानो यस्याः सा इति समासः ॥६०॥ तथा मदनसुन्दरी अपि एता प्रागुक्ता लेखनाद्याः लीलामात्रेण शिक्षति, कीदृशी मदनसुन्दरी?–विमला निर्मला प्रज्ञा–बुद्धिर्यस्याः सा विमलप्रज्ञा तथा धन्या–धर्मधनं लब्धी तथा विनयेन सम्पन्ना–युक्ता ॥ ६१ ॥

जिणमयनिउणेणज्झावएण सा मयणसुंदरीबाला । तह सिक्खविया जह जिणमयंमि कुसलत्तणं पत्ता ॥ ६२॥

एगा सत्ता दुविहो नओ य कालत्तयं गइचउक्कं । पंचेव अत्थिकाया, दव्वछक्कं च सत्त नया ॥ ६३॥

अट्ठेव य कम्माइं नवतत्ताइं च दसविहो धम्मो । एगारस पडिमाओ बारस वयाइं गिहीणं च ॥ ६४ ॥

इच्चाइ वियाराचारसारकुसलत्तणं च संपत्ता । अन्ने सुहुमवियारेवि मुणइ सा नियनामं व ॥ ६५ ॥

जिनमतविषये निपुणेन अध्यापकेन–पाठकेन सा मदनसुन्दरीकन्या तथा शिक्षिता–शिक्षां ग्राहिता यथा जिनमते कुशलत्वं प्राप्ता ॥ ६२ ॥ सतो भावः सत्ताऽस्तित्वमित्यर्थः, सा सर्वेष्वपि पदार्थेषु एकैव वर्त्तते, च पुनर्द्विविधो नयः द्रव्यपर्यायादिस्वरूपः तथा कालत्रयं गतिचतुष्कं पञ्चैव अस्तिकाया–धर्माधर्माकाशपुद्गलजीवस्वरूपाः सन्ति, च पुनर्द्रव्याणां–धर्मास्तिकायादीनां कालद्रव्ययुक्तानां षट्कमस्ति तथा नैगमाद्याः सप्त नयाः सन्ति ॥ ६३ ॥ ज्ञानावरणीयादीनि अष्टैव कर्माणि सन्ति, च पुनर्जीवादीनि नव तत्त्वानि सन्ति, तथा क्षान्त्यादिको दशविधो यतिधर्मो विद्यते, एकादश एकादश दर्शनाद्याः श्रावकप्रतिमाः सन्ति, च पुनर्गृहिणां स्थूलप्राणातिपातविरमणादीनि द्वादश व्रतानि सन्ति ॥ ६४ ॥ सा मदनसुन्दरी इत्यादयो ये विचाराचारयोः सारांरहस्यभूतपदार्थाः तेषु कुशलत्वं–निपुणत्वं सम्प्राप्ता । च पुनः साऽन्यान्–एतद्व्यतिरिक्तान् सूक्ष्मविचारानपि निजकनामवत् मुणति–जानाति ॥ ६५ ॥

अट्ठेव मूलपयडी गणइ मुणइ कम्मठिइं । जाणइ कम्मविवागं, बंधोदयदीरणं संतं ॥ ६६ ॥
कम्माणं मूलुत्तरपयडीओ गणइ मुणइ कम्मठिइं । जाणइ कम्मविवागं, बंधोदयदीरणं संतं ॥ ६६ ॥

जीसे सो उज्झाओ, संतो दंतो जिइंदिओ धीरो । जिणमयरओ सुबुद्धी, सा किं नहु होइ तस्सीला ? ॥ ६७ ॥

सयलकलागमकुसला, निम्मलसम्मत्तसीलगुणकलिया । लज्जासज्जा सा मयणसुन्दरी जुव्वणं पत्ता ॥ ६८ ॥

अन्नदिणे अब्भिंतरसहानिविट्ठेण नरवरिंदेण । अज्झावयसहियाओ, अणाविआओ कुमारीओ ॥ ६९ ॥

अष्टौ मूलप्रकृती-पुनः सा कर्मणां मूलभेदान् तथाऽष्टपञ्चाशदधिकशतमुत्तरप्रकृतीर्गणयति, तथा-कर्म्मणां स्थितिं त्रिंशत्कोटी-कोटीसागरोपमादिकां जानाति, पुनः कर्म्मणां विपाकं शुभाशुभानुभवस्वरूपं जानाति, तथा-कर्म्मणां बन्धोदयोदीरणया (णा) सत्ता-स्वरूपं जानाति ॥ ६६ ॥ यस्याः सुबुद्धिर्नाम श्रावक उपाध्यायः-पाठकः सा मदनसुन्दरी तच्छीला-गुरुतुल्यस्वभावा किं नहि भवति ? भवत्येवेत्यर्थः, कीदृशः स ? इत्याह-शान्तः क्षमायुक्तः, तथा दान्तो-मानसदमयुक्तः, पुनर्जितेन्द्रियस्तथा, धीरो-धैर्यवान्, बुद्धिमान् वा पुनर्जिनमते रक्तः ईदृशो यस्याः गुरुः सा तादृशगुणवती कथं न भवेत् ?, सा मदनसुन्दरी यौवनं प्राप्ता, कीदृशी सा ? इत्याह-सकलकलागमेषु-समस्तकलाशास्त्रेषु कुशला-निपुणा पुनर्निर्मला ये सम्यक्त्वशीलगुणास्तैः कलिता-युक्ता तथा लज्जायां सज्जा-परिपूर्णा प्रगुणा इतियावत् एवंविधा मदनसुन्दरीकन्या बाल्यावस्थामतिक्रम्य यौवनावस्थां प्राप्तवतीत्यर्थः ॥ ६८ ॥ अन्यस्मिन् दिने अभ्यन्तरसभायां निविष्टेन-उपविष्टेन नरवरेन्द्रेन-राज्ञा अध्यापकाभ्यां सहिते द्वे अपि कुमार्यौ आनायिते स्वपार्श्वे इति शेषः ॥ ६९ ॥

विणओणयाउ ताओ, सरूवलावन्नखोहिअसहाओ । विणिवेसिआउ रन्ना, नेहेणं उभयपासेसु ॥ ७० ॥
हरिसवसेणं राया, तासिं बुद्धिपरिक्खणनिमित्तं । एगं देइ समस्सा-पयं दुन्हंपि समकालं ॥ ७१ ॥
यथा "पुन्निहिं लब्भइएहु," तो तक्कालं अइचंचलाइ, अच्चंतगव्वगहिलाए सुरसुंदरीइ भणियं, हुं हुं पूरेमि निसुणेह ॥ ७२
यथा-धणजुव्वण सुवियड्ढपण, रोगरहिअ निअ देहु । मण वल्लह मेलावडउ, पुन्निहिं लब्भइ एहु ॥ ७३ ॥
तं सुणिय निवो तुट्ठो, पसंसए साहु साहु उज्झाओ । जेणेसा सिक्खविया, पुणरवि भणेइ नरनाहो ॥ ७४ ॥

विनयेन अवनते-नम्रे तथा स्वरूपलावण्येन क्षोभिता-चमत्कारं प्रापिता, सभा याभ्यां ते एतादृशे ते द्वे कन्ये राज्ञा स्नेहेन स्वस्य उभयोः पार्श्वयोः विनिवेशिते-स्थापिते उपवेशिते इतियावत् ॥ ७० ॥ राजा हर्षवशेन तयोर्बुद्धिपरीक्षानिमित्तं ताभ्यां द्वाभ्यामपि कन्याभ्यां समकालं एकं समस्यापदं ददाति ॥ ७१ ॥ एतत् समस्यापदं राज्ञा दत्तं, तदनन्तरं तत्काले सुरसुन्दर्या भणितं, अहो पहं एतां समस्यां पूरयामि, यूयं शृणुत, कीदृश्या सुरसुन्दर्या-अतिचञ्चलया अतिशयेन चपलया पुनरत्यन्त गर्वेण ग्रथिलया ॥ ७२ ॥ धनयौवनं सुविदग्धत्वं छेकत्वमित्यर्थः तथा रोगरहितो निजदेहः-स्वशरीरं तथा मनसो वल्लभः-प्रियो यः पुरुषादिस्तेन सार्द्धं मेलः-सम्बन्धः एतद्वस्तुवृन्दं पुण्यैर्लभ्यते ॥ ७३ ॥ तत् सुरसुन्दरीवाक्यं श्रुत्वा नृपो-राजा तुष्टः सन् प्रशंसते-इत्थं प्रशंसां करोति स्म, कथमित्याह-उपाध्यायोऽस्याः पाठको-गुरुः साधुः-समीचीन इत्यर्थः, येनैषा पुत्री इत्थं शिक्षिता-पाठिता, तदा पुनरपि भणति-
हे महाराज! इदं सत्यं-अत्र किमपि मृषा नास्तीत्यर्थः ॥ ७४ ॥

तौ रन्ना आइट्ठा, मयणा वि हु पूरए समस्सं तं । जिणवयणरया संता दंता सच्छहावसारिच्छं ॥ ७५ ॥

यथा–विणयविवेयपसण्णमणु सीलसुनिम्मलदेहु । परमप्पहमेलावडउ, पुण्णेहिँ लब्भइ एहु ॥ ७६ ॥

तो तीए उवझाओ, मायावि अ हरिसिआ न उण सेसा । जेण तत्तोवएसो न कुणइ हरिसं कुदिट्ठीणं ॥ ७७ ॥

इओ अ–कुरुजंगलंमि देसे, संखपुरीनाम पुरवरी अत्थि । जा पच्छा विक्खाया, जाया अहिछत्तनामेणं ॥ ७८ ॥

ततो राज्ञा आदिष्टाअनुज्ञाता सती मदनसुन्दर्यपि तां समस्यां पूरयति, कीदृशी मदनसुन्दरी?–जिनवचनेषु रता-रक्ता पुनः शान्ता-उपशमयुक्ता तथा दान्ता-इन्द्रियादिदमवती कीदृशीं समस्यां?-स्वस्वभावेन सदृक्षां-सदृशीम् ॥ ७५ ॥ विनयः-पूज्यादिषु वन्दननमस्कारादिरूपः विवेको-वस्तूनां भेदपरिज्ञानं सदसद्विवेचनमित्यर्थः, तथा शीलेन-ब्रह्मचर्येण सुनिर्मलः-त्युज्ज्वलो देहः, तथा परमउत्कृष्टः पन्था–मार्गः परमपथः मोक्षमार्ग इत्यर्थः तेन सह मेलः–सम्बन्धः एतद्वस्तुवृन्दं पुण्यैर्लभ्यते ॥७६॥ ततस्तदनन्तरं तस्या मदनसुन्दर्या उपाध्यायो-हर्षितः–तुष्टश्च पुनर्मातापि हर्षिता न पुनः शेषा राजादयो लोकाः ते हर्षं न प्राप्ता इत्यर्थः, कुतइत्याह–येन कारणेन तत्त्वोपदेशः कुदृष्टीनां मिथ्यात्विलोकानां हर्षं न करोति, अयं भावः–तस्या वाक्यं तत्त्वोपदेशरूपं राजादयस्तु कुदृष्टयः तेन तत् श्रुत्वा ते हर्षं न प्राप्ता इति, उक्तं च–गुणिनि गुणज्ञो रमतेइत्यादि ॥७७॥ इतश्च-अतः परं यज्जातं तदाह–कुरुजङ्गलदेशे शङ्खपुरीनाम प्रधानपुरी आस्ति, या पुरी पश्चात्–कियत्कालानन्तरं अहिच्छत्रानाम्ना विख्याता–प्रसिद्धा जाता ॥ ७८ ॥

विणओणयाउ ताओ, सरूवलावन्नखोहिअसहाओ । विणिवेसिआउ रन्ना, नेहेणं उभयपासेसु ॥ ७० ॥

हरिसवसेणं राया, तासिं बुद्धिपरिक्खणनिमित्तं । एगं देइ समस्सा–पयं दुविन्हंपि समकालं ॥ ७१ ॥

यथा "पुन्निहिँ लब्भइएहु," तो तक्कालं अइचंचलाइ, अच्चंतगव्वगहिलाए सुरसुंदरीइ भणियं, हुं हुं पूरेमि निसुणेह ७२

यथा–धणजुव्वण सुवियड्ढपण, रोगरहिअ निअ देहु । मण वल्लह मेलावडउ, पुन्निहिँ लब्भइ एहु ॥७३॥

तं सुणिय निवो तुट्ठो, पसंसए साहु साहु उज्झाओ । जेणेसा सिक्खविया, परिसावि भणेइ सच्चमिणं ॥ ७४ ॥

विनयेन अवनते–नम्रे तथा स्वरूपलावण्येन क्षोभिता–चमत्कारं प्रापिता, सभायाभ्यां ते एवंविधे ते द्वे कन्ये राज्ञा स्नेहेन स्वस्य उभयोः पार्श्वयोः विनिवेशिते–स्थापिते उपवेशिते इतियावत् ॥७०॥ राजा हर्षवशेन तयोर्बुद्धिपरीक्षानिमित्तं ताभ्यां द्वाभ्यामपि कन्याभ्यां समकालं एकं समस्यापदं ददाति ॥ ७१ ॥ एतत् समस्यापदं राज्ञा दत्तं, ततस्तदनन्तरं तत्काले सुरसुन्दर्या भणितं, अहो अहं एतां समस्यां पूरयामि, यूयं शृणुत, कीदृश्या सुरसुन्दर्या?–अतिचञ्चलयाअतिशयेन चपलया पुनरत्यन्त गर्वेणग्रथिलया ॥ ७२ ॥ धनयौवनं सुविदग्धत्वं छेकत्वमित्यर्थः तथा रोगरहितो निजदेहः–स्वशरीरं तथा मनसो वल्लभः-प्रियो यः पुरुषादिस्तेन सार्द्धं मेलः-सम्बन्धः एतद्वस्तुवृन्दं पुण्यैर्लभ्यते ॥ ७३ ॥ तब सुरसुन्दरीवाक्यं श्रुत्वा नृपो–राजा तुष्टः सन् प्रशंसते–इत्थं प्रशंसां करोति स्म, कथमित्याह–उपाध्यायोऽस्याः पाठको-गुरुः साधुः-समीचीन इत्यर्थः, येनैषा पुत्री इत्थं शिक्षिता-पाठिता, तदा पर्षदपि भणति-हे महाराज! इदं सत्यं-अत्र किमपि मृषा नास्तीत्यर्थः ॥ ७४ ॥

तो रन्ना आइट्ठा, मयणा वि हु पूरए समस्सं तं । जिणवयणरया संता दंता ससहावसारिच्छं ॥ ७५ ॥
यथा–विणयविवेयपसण्णमणु सीलसुनिम्मलदेहु । परमप्पहमेलावडउ, पुण्णेहिँ लब्भइ एहु ॥ ७६ ॥
तो तीए उवझाओ, मायावि अ हरिसिआ न उण सेसा । जेण तत्तोवएसो न कुणइ हरिसं कुदिट्ठीणं ॥ ७७ ॥
इओ अ–कुरुजंगलंमि देसे, संखपुरीनाम पुरवरी अत्थि । जा पच्छा विक्खाया, जाया अहिछत्तनामेणं ॥ ७८ ॥

ततो राज्ञा आदिष्टाअनुज्ञाता सती मदनसुन्दर्यपि तां समस्यां पूरयति, कीदृशी मदनसुन्दरी?–जिनवचनेषु रता-रक्ता पुनः शान्ता-उपशमयुक्ता तथा दान्ता-इन्द्रियादिदमवती कीदृशीं समस्यां?-स्वस्वभावेन सदृक्षां-सदृशीम् ॥ ७५ ॥ विनयः-पूज्यादिषु वन्दननमस्कारादिरूपः विवेको-वस्तूनां भेदपरिज्ञानं सदसद्विवेचनामित्यर्थः, तथा शीलेन-ब्रह्मचर्येण सुनिर्मल-स्युज्ज्वलो देहः, तथा परमउत्कृष्टः पन्था–मार्गः परमपथः मोक्षमार्ग्ग इत्यर्थः तेन सह मेलः–सम्बन्धः एतद्वस्तुवृन्दं पुण्यैर्लभ्यते ॥७६॥ ततस्तदनन्तरं तस्या मदनसुन्दर्या उपाध्यायो-हर्षितः–स्तुष्टश्च पुनर्मातापि हर्षिता न पुनः शेषा राजादयो लोकाः ते हर्षं न प्राप्ता इत्यर्थः, कुतइत्याह–येन कारणेन तत्त्वोपदेशः कुदृष्टीनां मिथ्यात्विलोकानां हर्षं न करोति, अयं भावः–तस्या वाक्यं तत्त्वोपदेशरूपं राजादयस्तु कुदृष्टयः तेन तत् श्रुत्वा ते हर्षं न प्राप्ता इति, उक्तं च–गुणिनि गुणज्ञो रमतेइत्यादि ॥७७॥ इतश्च-अतः परं यज्जातं तदाह–कुरुजङ्गलदेशे शङ्खपुरीनाम प्रधानपुरी आस्ति, या पुरी पश्चात्–कियत्कालानन्तरं अहिच्छत्रानाम्ना विख्याता–प्रसिद्धा जाता ॥ ७८ ॥

तत्थत्थि महीपालो कालो इव वेरिआण दमिआरी । पइवरिसं सो गच्छइ, उज्जेणिनिवस्स सेवाए ॥ ७९ ॥
अन्नदिणे तप्पुत्तो, अरिदमनो नाम तारतारुन्नो । संपत्तो पिअठाणे, उज्जेणिं रायसेवाए ॥ ८० ॥
तं च निवपणमणत्थं, समागयं तत्थ दिव्वरूवधरं । सुरसुंदरी निरिक्खइ, तिक्खकडक्खेहिँ ताडंती ॥ ८१ ॥
तत्थेव थिरनिवेसिअदिट्ठी दिट्ठा निवेण सा बाला । भणिया य कहसु वच्छे! तुज्झ वरो केरिसो होउ?॥८२॥
तो तीए हिट्ठाए, धिट्ठाए मुक्कलोअलज्जाए । भणियं तायपसाया, जइ लब्भइ मग्गियं कहवि ॥ ८३ ॥

तत्र-तस्यां नगर्यां वैरिणां काल इव-कालसदृशो दमितारिर्नाम महीपालो राजाऽस्ति, स राजा वर्षं वर्षं प्रति प्रतिवर्षं उज्जयिन्या नगर्याः-उज्जयिन्या नगर्या नृपस्य-राज्ञः सेवायै-सेवार्थं गच्छति ॥ ७९ ॥ अन्यस्मिन् दिने तत्पुत्रो अरिदमनो नाम कुमारो राज्ञः सेवार्थं पितृस्थाने स्वयं उज्जयिनीं सम्प्राप्तः, कीदृशो अरिदमनः?-तारमुद्भटं तारुण्यं-यौवनं यस्य स तारतारुण्यः ॥८०॥ तदा नृपस्य प्रणमनार्थं नमस्कारार्थं-तत्र समागतं दिव्यरूपधरं-अद्भुतसौन्दर्यधारकं तं अरिदमनकुमारं सुरसुन्दरी नृपकन्या तीक्ष्णैः कटाक्षैः-नेत्रप्रान्तैस्ताडयंती निरीक्षते-विलोकयतीति ॥ ८१ ॥ तत्र-तस्मिन्नेव कुमारे स्थिरं-निश्चलं यथा स्यात्तथा निवेशिता स्थापिता दृष्टिर्यया सा एवंविधा सा सुन्दरी-बाला नृपेण दृष्टा भणिता-उक्ता च हे वत्से! त्वं कथयस्व तव वरो भर्त्ता कीदृशो भवतु?॥८२॥ ततः-तदनन्तरं हृष्टया हर्षं प्राप्तया पुनर्धृष्टया धृष्टत्वयुक्तया तथा मुक्ता लोकलज्जा यया सा तया मुक्तलोकलज्जाया तया सुरसुन्दर्या भणितं-उक्तम्, किमुक्तमित्याह-तातस्य-पितुः प्रसादात् यदि कथमपि मार्गितं लभ्यते ॥ ८३ ॥

...ो सव्वकलाकुसलो, तरुणोवररूवपुण्णलायन्नो । एरिसओ होउ वरो, अहवा ताओच्चिअ पमाणं ॥ ८४ ॥

...णं ताय तुमं च्चिय, सेवयजणमणसमीहियत्थाणं । पूरणपवणो दीससि, पच्चक्खो कप्परुक्खव्व ॥ ८५ ॥

...ो तुट्ठो नरनाहो, दिट्ठिनिवेसेण नायतीइमणा । पभणेइ होउ वच्छे ! एसऽरिदमणो वरो तुज्झ ॥ ८६ ॥

...ो सयलसभालोओ, पभणइ नरनाह! एस संजोगो । अइसोहणोऽहिवल्लीपूगतरूणं व निब्भंतं ॥ ८७ ॥

अह मयणसुंदरीवि हु, रन्ना नेहेण पुच्छिया वच्छे !। केरिसओ तुज्झ वरो, कीरउ ? मह कहसु अविलंबं ॥ ८८ ॥

तर्हि सर्वकलासु कुशलः चतुरः पुनस्तरुणो-यौवनवयःस्थस्तथा वररूपेण-प्रधानाकृत्या पुण्यं-पवित्रं लावण्यं-सौन्दर्यं यस्य स वर... ईदृको योऽयं पुमान् पुरोवर्ती स वरो भवतु, अथवा तात एव प्रमाणं तातो यं ददाति स एव वरोऽस्तु इत्यर्थः ॥८४॥ अथ सा निजेष्टसिद्ध्य... पितरं स्तौति, हे तात ! येन कारणेन त्वमेव सेवकजनस्य मनःसमीहितार्थानां-मनोवाञ्छितकार्याणां पूरणे प्रवणः-स्तत्परो दृश्यसे, ... इव ?-प्रत्यक्षः कल्पवृक्ष इव ॥८५॥ ततो नरनाथो-राजा तद्वचनश्रवणात्तुष्टः सन् प्रभणति वक्ति, किं-वक्ति ? इत्याह-हे वत्से । एषो... रिदमनः कुमारः तव वरोऽस्तु, कीदृशो नरनाथः ?-दृष्टिनिवेशेन-कुमारे दृष्टिस्थापनेन ज्ञातं तस्या मनो येन सः॥८६॥ततः सकलः समस्तः सभालोकः प्रभणति-हे नरनाथ ! एषोऽनयोः संयोगो निर्भ्रान्तं-निस्सन्देहं अतिशोभनः सञ्जात इति शेषः, कयोरिव ?-अहिव... पूगतर्वोरिव-नागवल्लीक्रमुकवृक्षयोरिव यथा तयोः संयोगो अतिशोभनोऽस्ति तथाऽनयोरपीत्यर्थः ॥ ८७ ॥ अथानन्तरं राज्ञा मदन... सुन्दर्यपि स्नेहेन पृष्टा-हे वत्से ! तव कीदृशको वरो भर्ता मया क्रियतां ? ममाग्रेऽविलम्बं यथास्यात्तथा शीघ्रमित्यर्थः कथयस्व ॥८८॥

सा पुण जिणवयणवियारसारसंजणियनिम्मलविवेआ । लज्जागुणिक्कसज्जा, अहोमुही जा न जंपेइ ॥ ८९ ॥
ताव नरिंदेण पुणो, पुट्ठा सा भणइ ईसि हसिऊणं । ताय ! विवेयसमेओ, मं पुच्छसि तंसि किमजुत्तं ॥ ९० ॥
जेण कुलबालिआओ, न कहंति हवेउ एस मज्झ वरो । जो किर पिऊहिं दिन्नो, सो चेव पमाणियव्वुत्ति ॥ ९१ ॥
अम्मापिउणोवि निमित्तमित्तमेवेह वरपयाणंमि । पायं पुव्वनिबद्धो, संबंधो होइ जीवाणं ॥ ९२ ॥
जं जेण जया जारिसमुवज्जियं होइ कम्म सुहमसुहं । तं तारिसं तया से, संपज्जइ दोरियनिबद्धं ॥ ९३ ॥

जिनवचनानां यो विचारसारस्तेन सञ्जनितः-समुत्पादितो निर्मलो विवेको यस्याः साऽत एव लज्जागुणे एकसज्जा अद्वितीय-तत्परा सा पुनर्मदनसुन्दरी अधोमुखी सती यावन्न(नुत्तरं)ददाति ॥८९॥ तावन्नरेन्द्रेण पुनः पृष्टा सा ईषद्धसित्वा भणति, राजानं प्रति कथयति-हे तात ! त्वं विवेकसमेतो-विवेकयुक्तोऽसि, मां प्रति अयुक्तं किं पृच्छसि ? विवेककलितस्य भवतो मां प्रति एतत्प्रच्छनम-युक्तमिति भावः॥ ९०॥ कुत इत्याह—येन कारणेन कुलबालिकाः-सुकुलोत्पन्नाः कन्याः एवं न कथयन्ति, मम एष वरो भवतु, किन्तु यः किल मातापितृभ्यां दत्तः स एव वरः-प्रमाणयितव्यः प्रमाणीकर्त्तव्यः ॥९१॥ इह-संसारे वरप्रदाने-कन्याया भर्तृप्रदानविषये मातापित-रावपि निमित्तमात्रमेव न पुनस्तात्त्विककारणमिति भावः, प्रायो-बाहुल्येन जीवानां पूर्वस्मिन् भवे निबद्धो रचितः सम्बन्धो न भवति, प्रायः येन सह सम्बन्धो रचितो भवेत् तेनैव सह इह सम्बन्धो भवतीत्यर्थः ॥ ९२ ॥ येन प्राणिना यदा यस्मिन् काले यत्-यादृशं शुभमशुभं कर्म उपार्ज्जितं भवति तस्य प्राणिनस्तदा तस्मिन्काले-तत्तादृशं कर्म सम्पद्यते-उदयमायाति, कीदृशं तत् ? दोरिकयानिबद्धमिव दोरिकानिबद्धम् ॥ ९३ ॥

जा कन्ना बहुपुन्ना, दिन्ना कुकुलेवि सा हवइ सुहिया । जा होइ हीणपुन्ना, सुकुले दिन्नावि सा दुहिया ॥९४॥
ता ताय ! नायतत्तस्स, तुज्झनो जुज्जए इमो गव्वो । जं मज्झ कयपसयापसायओ सुहदुहे लोए ॥ ९५ ॥
जो होइ पुन्नबलिओ, तस्स तुमं ताय ! लहु पसीएसि । जो पुण पुण्णविहूणो, तस्स तुमं नो पसीएसि ॥ ९६ ॥
भवियव्वया सहावो, दव्वाइया सहाइणो वावि । पायं पुव्वोवज्जियकम्माणुगया फलं दिंति ॥ ९७ ॥
तो दुम्मिओय राया, भणेइ रे तंसि मह पसाएण । वत्थालंकाराइ, पहिरंती कीसिमं भणासि ? ॥ ९८ ॥

या कन्या बहुपुण्या भवेत्, सा कुकुले-दरिद्रादिगृहे दत्तापि सुखिता-सुखिनी भवति, या तु हीनपुण्या भवति सा सुकुलेपि दत्ता दुःखिता भवति॥९४॥तस्मात्कारणात् हे तात ! ज्ञातं तत्त्वं येन स ज्ञाततत्त्वः तस्य तत्त्वज्ञस्य त गर्वो न युज्यते, यन्मम कृतप्रसादाऽप्रसादतो लोके सुखदुःखे भवतः, मत्कृतप्रसादतः सुखं मत्कृतात्प्रसादतो दुःखं भवतीत्यर्थः अयं गर्वस्तव न युक्तः ॥ ९५ ॥ यः पुमान् पुण्यबलिकः-पुण्येन बलवान् भवति, तस्योपरि हे तात ! त्वं लघु-शीघ्रं प्रसीदसि-प्रसन्नो भवसि, यः पुनः पुण्यहीनो भवेत् तस्योपरि त्वं न प्रसीदसि ॥ ९६ ॥ भवितव्यता १ स्वभावो२ वा पुनर्द्रव्याद्या-द्रव्यक्षेत्रकालभावादयः साहाय्यकारिणोपि पूर्वस्मिन् भवे उपार्जितानि यानि कर्म्माणि तानि अनुगताः-तत्सम्मिलिता एव फलं ददति, न तु तद्व्यतिरिक्ताः ॥ ९७ ॥ ततश्च-तद्वचनश्रवणानन्तरं च राजा दुर्मनस्की भूतः सन् भणति, पुत्रीं प्रति कथयति, रे ! त्वं मत्प्रसादेन वस्त्रालङ्कारादि-विविधाद्भुतनेपथ्याभूषणादि परिधानासि, इदं प्रागुक्तं, पुनः कथं भणसि ? ॥ ९८ ॥

हसिऊण भणइ मयणा, कयसुकयवसेण तुज्झ गेहंमि । उप्पन्ना ताय! अहं, तेणं माणेमि सुक्खाइं ॥९९॥
पुव्वकयं सुकयं चिअ, जीवाणं सुक्खकारणं होइ । दुकयं च कयं दुक्खाण, कारणं होइ निब्भंतं ॥ १०० ॥
न सुरासुरेहिं, नो नरवरेहिं, नो बुद्धिबलसमिद्धेहिं । कहवि खलिज्जइ इंतो, सुहासुहो कम्मपरिणामो ॥ १०१ ॥
तो रुट्ठो नरनाहो, अहो अहो अप्पपुन्निआ एसा । मज्झ कयं किंपि गुणं, नो मन्नइ दुव्वियड्ढाय ॥ १०२ ॥

तदा मदनसुन्दरी हसित्वा भणति, हे तात कृतसुकृतवशेन प्राग्भवोपार्जित पुण्यबलात् अहं तव गृहे उत्पन्नास्मि तेन सुखानि मानयामि अनुभवामि ॥ ९९ ॥ हे तात जीवानां पुर्वकृतं प्राग्भवोपार्जितं सुकृतं पुण्यमेव सुखस्य कारणं हेतुर्भवति, च पुनः दुष्कृतं पापं प्राग्भवेकृतं सत निर्भ्रान्तं निस्सन्देहं दुःखानां कारणं भवति ॥ १०० ॥ इन्तोवि आयन् उदयमागच्छन् शुभाशुभः कर्मणां परिणामः कथमपि केनापि प्रकारेण सुरासुरैर्देवदानवैर्न स्खल्यते, न निराक्रियते नो नरवरै भूपतिभिः स्खल्यते, न पुनर्बुद्धिबलसमृद्धैः स्खलति, बुद्धिसमृद्धाः महाबुद्धयोबलसमृद्धाः महाबलवन्तस्तैरपि न दूरीक्रियते इत्यर्थः ॥ १०१ ॥ ततस्तद्वचनश्रवणानन्तरं नरनाथो राजा रुष्टः कुपितः सन् इत्युवाचेति शेषः, अहो अहो लोका एषा कन्या अल्पपुण्यिका हीनपुण्या च पुनर्दुर्विदग्धा चातुर्य्यरहिताऽस्ति, अतएव मत्कृतं किमपि गुणं न मन्यते ॥ १०२ ॥

पभणेइ सहालोओ, सामिय ! किमियं मुणेइ मुद्धमई ? । तं चेव कप्परुक्खो, तुट्ठो रुट्ठो कयंतो य ॥ १०३ ॥
मयणा भणेइ धिद्धी, धणलवमित्तत्थिणो इमे सव्वे । जाणंतावि हु अलिअं, मुहप्पियं चेव जंपंति ॥ १०४ ॥
जइ ताय ! तुह पसाया, सेवयलोआ हवंति सव्वेवि । सुहिया ता समसेवानिरया किं दुक्खिया एगे ? ॥१०५॥
तम्हा जो तुम्हाणं, रुच्चइ सो ताय ! मज्झ होउ वरो । जइ अत्थि मज्झ पुन्नं, ता होही निग्गुणोवि गुणी ॥१०६॥
जइ पुण पुन्नविहीणा, ताय ! अहं ताव सुंदरोवि वरो । होही असुंदरुच्चिय, नूणं मह कम्मदोसेणं ॥ १०७ ॥

अथ सभालोकः प्रभणति कथयति स, हे स्वामिन्–इयं मुग्धमतिर्मूढबुद्धिर्बाला किं जानाति?, त्वमेव तुष्टः सन् कल्पवृक्षोऽसि वांछितार्थदायकत्वात्, च पुनः रुष्टः सन् कृतान्तो यमतुल्योऽसि सद्योनिग्रहकरणात् ॥ १०३ ॥ एतत्सभालोकवचः श्रुत्वा मदनसुन्दरी भणति, एतान् धिग् धिग् अस्तु इमे सर्वे लोका धनस्य लवमात्रं अर्थयन्तेऽभिलपन्तीत्येवं शीला धनलवमात्रार्थिनः जानन्तोऽपि हु निश्चितम् अलीकं–मिथ्यावचनं मुखप्रियं–मुखमिष्टमेव जल्पन्ति ॥ १०४ ॥ हे तात ! यदि तव प्रसादात् सर्वेऽपि सेवकलोकाः सुखिनो भवन्ति तत्तर्हि समा–तुल्या या सेवा तस्यां निरता–तत्परा एके केचित्सेवकलोका दुःखिताः कथं? सर्वेऽपि सुखिन एव युज्यन्ते इति भावः ॥ १०५ ॥ तस्मात् हे तात ! यो युष्मभ्यं रोचते स एव मम वरो भवतु, यदि मम पुण्यमस्ति तर्हि भवद्दत्तो निर्गुणोऽपि वरो गुणी–गुणवान् भविष्यति ॥१०६॥ यदि पुनर्हे तात ! अहं पुण्यविहीनाऽस्मि तर्हि सुन्दरोऽपि वरो नूनं–निश्चितं मम कर्मदोषेण–मदीयदुष्कर्मदोषात् असुन्दर एव भविष्यति ॥ १०७ ॥

तो गाढयरं राया, रुट्ठो चिंतेइ दुव्वियड्ढाए । एयाइ कओ लहुओ, अहं तओ वेरिणी एसा ॥ १०८ ॥

रोसेण वियडभिउडीभीसणवयणं पलोइऊण निवं । दक्खो भणेइ मंती, सामिय ! रइवाडियासमओ ॥ १०९ ॥

रोसेण धमधमंतो, नरनाहो तुरयरयणमारूढो । सामंतमंतिसहिओ, विणिग्गओ रायवाडीए ॥ ११० ॥

जाव पुराओ बाहिं , निग्गच्छइ नरवरो सपरिवारो । ता पुरओ जणवंदं, पिच्छइ साडंबरमियंतं ॥ १११ ॥

तो विम्हिएण रन्ना, पुट्ठो मंती स नायवुत्तंतो । विन्नवइ देव निसुणह, कहेमि जणवंदपरमत्थं ॥ ११२ ॥

ततस्तदनन्तरं राजा गाढतरं-अत्यर्थं रुष्टः सन् चिन्तयति, किं चिन्तयतीत्याह-दुर्विदग्धया-अज्ञानवत्या एतया पुत्र्याऽहं लघुकः कृतस्ततस्तस्मात्कारणात् एषा मम वैरिणी वर्त्तते नतु पुत्रीतिभावः ॥ १०८ ॥ रोषेण-कोपेन विकटा-विकराला या भृकुटी तया भीषणं-भयानकं वदनं-मुखं यस्य स तं तथाविधं नृपं प्रलोक्य-दृष्ट्वा दक्षश्चतुरो मन्त्री भणति, स्वामिन् राजवाटिकागमनसमयो वर्त्तते ॥ १०९ ॥ तदा रोषेण धमधमायमानो नरनाथः तुरगरत्नं-प्रवराश्वं आरूढः सामन्तैर्मन्त्रिभिश्च सहितः सन् राजवाटिकायां निर्गतः ॥ ११० ॥ यावन्नरवरो-राजा सपरिवारः-परिवारसहितः पुराद्बहिर्निर्गच्छति, तावत् पुरतोऽग्रतः साडम्बरं-आडम्बरसहितं आयान्तं जनवृन्दं-मनुष्यसमूहं प्रेक्षते-पश्यति ॥ १११ ॥ ततो ज्ञातो वृत्तान्तो येन स ज्ञातवृत्तान्तः स मन्त्री अमात्यो विस्मितेन राज्ञा पृष्टः सन् विज्ञपयति, हे देव ! हे महाराज ! यूयं निशृणुत अहं जनवृन्दस्य परमार्थं-भावार्थं कथयामि ॥ ११२ ॥

सामिय ! सरूवपुरिसा, सत्तसया नववया ससोंडीरा । दुट्ठकुट्ठभिभूया, सव्वे एगत्थ संमिलिया ॥ ११३ ॥
एगो य ताण बालो, मिलिओ उंबरयवाहिगहियंगो। सो तेहिं परिगहिओ, उंबरराणुत्ति कयनामो ॥११४॥
वरवेसरिमारूढो, तयदोसी छत्तधारओ तस्स । गयनासा चमरधरा, घिणिघिणिसद्दा य अग्गपहा ॥ ११५॥
गयकन्ना घंटकरा, मंडलवइ अंगरक्खगा तस्स । दद्दुल थइआइत्तो, गलीअंगुलि नामओ मंती ॥ ११६ ॥

हे स्वामिन् ! सप्त शतानि–सप्तशतसङ्ख्याका नवं वयो येषां ते नववयसो युवान इत्यर्थः, सशौण्डीर्याः–पराक्रमवन्तः सरूपा–रूपवन्तः पुरुषा दुष्टकुष्ठरोगेण अभिभूताः–पीडिताः एते सर्व्वे एकत्र सम्मिलिताः सन्ति ॥ ११३ ॥ च पुनस्तेषां कुष्ठिपुरुषाणां एको बालो मिलितोऽस्ति, कीदृशो बालः ?–उम्बरकव्याधिना–कुष्ठरोगविशेषेण गृहीतमङ्गं यस्य स तथोक्तः स बालस्तैः कुष्ठिपुरुषैः परिगृहीतः–सङ्गृहीतः कीदृशः ?–उम्बरराणउ–इति कृतं नाम यस्य स तथोक्तः ॥ ११४ ॥ स बालो वरां–प्रधानां वेसरीमश्वतरीं आरूढोऽस्ति, त्वग्दोषी–श्वेतकुष्ठी पुमान् तस्य उम्बरराजस्य छत्रधारकोऽस्ति, गतनासौ गलितनासिकौ पुरुषौ चामरधरौ स्तः, तथा रोगवशात् घिणि घिणि इत्येवंशब्दो येषां ते एवंविधा नराः तस्याग्रपथाः सन्ति अग्रे पन्था येषां ते अग्रगामिन इत्यर्थः ॥११५॥ गतौ–गलितौ कर्णौ येषां ते एवंविधा नराः तस्य घण्टाकरा घण्टावादिनः सन्तीत्यर्थः. रक्तमण्डलरोगवन्तः पुरुषास्तस्य अङ्गरक्षकाः सन्ति, (दद्दुल)त्ति दद्रुरोगी पुमान् "थइयाइत्तोति" स्थगीधरस्ताम्बूलधरोऽस्तीत्यर्थः. तथा–गलिताङ्गुलिनामको मन्त्री अस्ति ॥ ११६ ॥

केवि पसूइयवाया, कच्छादब्भेहिं केवि विकराला । केवि विउंचिअपामासमन्निया सेवगा तस्स ॥ ११७ ॥

एवं सो कुट्ठिअपेडएण परिवेढिओ महीवीढे । रायकुलेसु भमंतो, पंजिअदाणं पगिण्हेइ ॥ ११८ ॥

सो एसो आगच्छइ, नरवर ! आडंबरेण संजुत्तो । ता मग्गमिणं मुत्तुं, गच्छह अन्नं दिसं तुब्भे ॥ ११९ ॥

तो वलिओ नरनाहो, अन्नाइ दिसाइ जाव ताव पुरो। तो पेडयंपि तीए, दिसाइ वलियं तुरिअ तुरितं ॥१२०॥

राया भणेइ मंतिं, पुरओ गंतूणिमे निवारेसु । मुहमग्गियंपि दाउं, जेणेसिं दंसणं न सुहं ॥ १२१ ॥

तस्य उम्बरराजस्य केऽपि सेवकाः प्रसूतिकवातरोगयुक्ताः सन्ति, केऽपि कच्छुदर्भभि-र्विकरालाः सन्ति, केऽपि विचर्चिकापामासमन्विताः सन्ति, विचर्चिकाजातीया या पामा तया सँयुक्ताः सन्तीत्यर्थः ॥ ११७ ॥ एवममुना प्रकारेण स उम्बरराजः कुष्ठिकानां पेटकेन-समूहेन परिवेष्टितः-समन्तात्परिवृतो महीपीठे-पृथ्वीतले भ्रमन् राजकुलेषु-नृपाणां गृहेषु 'पञ्जियत्ति' मुखमार्गितं दानं प्रगृह्णाति ॥ ११८ ॥ हे नरवर ! हे महाराज ! स एष उम्बरराज आडम्बरेण सँयुक्त आगच्छाति, तत्तस्मादिमं मार्गं मुक्त्वा-त्यक्त्वा यूयं अन्यां दिशं गच्छत ॥ ११९ ॥ ततो नरनाथो-राजा यावदन्यस्यां दिशि वलितस्तावत्पुरोऽग्रे ततः कुष्ठिपेटकमपि त्वरितं त्वरितं तस्यां दिशि वलितम् ॥ १२० ॥ तदा राजा मन्त्रिणं प्रति भणति, त्वं पुरतो-अग्रतो गत्वा इमान् निवारयस्व, किं कृत्वा ?-मुखमार्गितमपि दत्त्वा येन कारणेन एषां कुष्ठिनां दर्शनं शुभं नास्ति ॥ १२१ ॥

जा तं करेइ मंती, गलिअंगुलिनामओ उट्ठियं ताव । नरवर पुरओ ठाउं, एवं भणिउं समाढत्तो ॥ १२२ ॥
सामिअ ! अम्हाण पहू, उंबरनामेण राणओ एसो । सव्वत्थ वि मन्निज्जइ, गरुएहिं दाणमाणेहिं ॥ १२३ ॥
तेणऽम्हाणं धणकणयचीरपमुहेहिं कीरइ न किंपि । एतस्स पसायेणं, अम्हे सव्वेवि अइसुहिणो ॥ १२४ ॥
किंच-एगो नाह ! समत्थि, अम्ह मणचिंतिओ विअप्पुत्ति । जइ लहइ राणओ राणियंति ता सुंदरं होइ ॥ १२५ ॥
ता नरनाह ! पसायं, काऊणं देहि कन्नगं एगं । अवरेण कणगकप्पडदाणेणं तुम्ह पज्जत्तं ॥ १२६ ॥

यावत्तन्नृपभणितं वचनं मन्त्री करोति, तावद्गलिताङ्गुलिनामको मन्त्री द्रुतं-शीघ्रं नरवरस्य-राज्ञः पुरतोऽग्रतः स्थित्वा एवं भणितुं-कथयितुं समारब्धः-प्रारम्भं कृतवान् ॥ १२२ ॥ हे स्वामिन् ! एषोऽस्माकं प्रभुः-स्वामी उम्बरनाम्ना राजा सर्वत्रापि गुरुकैर्महद्भिर्दानमानैर्मान्यते-नृपादिभिः सत्क्रियते इत्यर्थः ॥ १२३ ॥ तेन कारणेन अस्माभिर्धनकनकचीरप्रमुखैः किमपि न क्रियते, धनस्वर्णवस्त्रादिभिरस्माकं किमपि कार्यं नास्तीत्यर्थः, एतस्य-उम्बरराज्ञः प्रसादेन वयं सर्वेऽपि अतिशयेन सुखिनः स्मः ॥ १२४ ॥ परं हे नाथ ! एकोऽस्माकं मनश्चिन्तित इत्येवंस्वरूपो विकल्पो विचारोऽस्ति, यदि अस्माकं राजा इत्येवंस्वरूपां स्वोचितामित्यर्थः, राज्ञीं लभते तर्हि सुन्दरं भवति-शोभनं स्यात् ॥ १२५ ॥ तत्तस्मात् हे नरनाथ ! हे राजन् ! प्रसादं कृत्वा एकां कन्यकां देहि अपरेण-अन्येन युष्माकं कनकवस्त्रादिदानेन पर्याप्तं सृतं अपरेण नास्माकं कार्यमित्यर्थः ॥ १२६ ॥

तो भणइ रायमंती, अहो अजुत्तं विमग्गिअं तुमए । को देइ नियं धूयं, कुट्ठकिलिट्ठस्स जाणंतो ? ॥ १२७ ॥
गलिअंगुलिणा भणियं, अम्हेहिं सुया निवस्सिमा कित्ती । जं किर मालवराया, करेइ नो पत्थणाभंगं ॥१२८॥
तो सा निम्मलकित्ती, हारिज्जउ अज्ज नरवरिंदस्स । अहवा दिज्जउ काविहु, धूया कुकुलेवि संभूया ॥ १२९ ॥
पभणेइ नरवरिंदो, दाहिस्सइ तुम्ह कन्नगा एगा । को किर हारइ कित्तिं, इत्तियमित्तेण कज्जेण ? ॥ १३० ॥
चिंतेइ मणे राया, कोवानलजलियनिम्मलविवेगो । नियधूयं अरिभूयं, तं दाहिस्सामि एयस्स ॥ १३१ ॥

ततो राजमन्त्री भणति, अहो ! त्वयाऽयुक्तं विमार्गितं कुष्ठरोगेण क्लिष्टाय-क्लेशयुक्ताय पुरुषाय जानन् सन् कः पुमान् निजां पुत्रीं ददाति ? अपि तु न कोऽपि ददातीत्यर्थः ॥ १२७ ॥ एतन्नृपमन्त्रिवचः श्रुत्वा गलिताङ्गुलिमन्त्रिणा भणितम्-अस्माभिर्नृपस्य इयं कीर्त्तिः श्रुताऽभूत् यत् किल मालवदेशस्य राजा प्रार्थनाभङ्गं न करोति, यः कोऽपि यद्वस्तु याचते तस्मै तद्ददातीत्यर्थः ॥ १२८ ॥ ततस्तस्मात्कारणात् अद्य नरवरेन्द्रस्य सा निर्म्मलकीर्त्तिर्हार्यताम्, अथवा कापि कुकुलेऽपि सम्भूता-कुत्सितकुलेऽप्युत्पन्ना कन्या दीयताम् ॥ १२९ ॥ तदा नरवरेन्द्रो राजा प्रभणति-कथयति स्म युष्मभ्यं एका कन्यकाऽस्माभिर्दास्यते, किल निश्चितं एतावन्मात्रेण कार्येण कः स्वकीयां कीर्त्तिं हारयति ? ॥ १३० ॥ कोपानलेन-क्रोधाग्निना ज्वलितो निर्म्मलो विवेको यस्य स एवंविधः सन् राजा मनसि चिन्तयति, किमित्याह-अहं तां अरिभूतां-शत्रुतुल्यां निजकन्यां एतस्मै कुष्ठिने दास्यामि ॥ १३१ ॥

सहसा वलिऊण तओ, नियआवासंमि आगओ राया। बुल्लावइ तं मयणासुंदरिनाम निय धूय ॥ १३२ ॥
हुं अज्जवि जइ मन्नसि, मज्झ पसायस्स संभवं सुक्खं। ता उत्तमं वरं ते, परिणाविय देमि भूरि धणं ॥ १३३॥
जइ पुण नियकम्मं चिय, मन्नसि ता तुज्झ कम्मणाणीओ। एसो कुट्ठिअराणो, होउ वरो किं वियप्पेण? ॥१३४॥
हसिऊण भणइ बाला, आणीओ मज्झ कम्मणा जो उ। सो चेव मह पमाणं, राओ वा रंकजाओ वा ॥१३५॥
कोवंधेणं रन्ना, सो उंबरराणओ समाहूओ। भणिओ य तुममिमीए, कम्माणीओसि होसु वरो ॥ १३६ ॥

सहसाऽकस्मात्ततस्तस्मात् स्थानात् वलित्वा राजा निजावासे-स्वमन्दिरे आगतः, आगत्य च तां मदनसुन्दरीनाम्नीं निजां पुत्रीं आह्वयति ॥ १३२ ॥ आहूय च किं कथयतीत्याह—हुं इत्यनादरे अरे! त्वं अद्यापि यदि मम प्रसादसम्भवं मत्प्रसादोत्पन्नं सुखं मन्यसे तत्तर्हि ते-तुभ्यं उत्तमं-प्रधानं वरं-भर्त्तारं परिणाय्य भूरि-प्रचुरं धनं दद्मि (दामि)-प्रयच्छामि ॥ १३३ ॥ यदि पुनर्निजकर्म्मैव त्वं मन्यसे तत्तर्हि तव कर्म्मणा आनीत एष कुष्ठिकराजो वरो भवतु, किं विकल्पेन ?. इह विकल्पस्य-विचारस्य किमपि कार्यं नास्तीत्यर्थः ॥ १३४ ॥ एतन्नृपवचः श्रुत्वा मदनसुन्दरीबाला हसित्वा भणति. यो मम कर्म्मणा आनीतः स एव वरो मम प्रमाणं राजा वा भवतु रङ्कजातो-रङ्कपुत्रो वा भवतु ॥ १३५ ॥ एतत्कन्यावचः श्रुत्वा कोपान्धेन राज्ञा स उम्बरराजः समाहूतः-स्वसमीपदेशे आकारितो भणितश्च। किं भणित इत्याह-त्वं अस्याः कर्म्मणा आनीतोऽसि तेन त्वं अस्या वरो भव ॥ १३६ ॥

